# संस्कृतरत्नाकरः

## अखिलभारतीय-संस्कृत-साहित्य सम्मेलनस्य
## राजस्थानप्रदेशशाखाधिवेशनाङ्कः





साहित्यसम्मेलनपद्मकोषमुद्घाटयन् रम्यवचोमयूखैः ।
'सुखाड़िया'-मोहन-सूर्य एष लोकान्समानन्दयतीह धुर्यः ॥

...र्यं—रूप्यकपञ्चकम्

एकाङ्कस्य—५० पणकाः

प्रबन्ध-सम्पादकः

**डॉ. मण्डनमिश्रः शास्त्री एम्. ए, पीएच्. डी.**

अस्याङ्कस्य सम्पादकः

**डॉ. हरिहरः त्रिवेदी, एम्. ए., डी-लिट्., काव्यतीर्थः**

# विषयानुक्रमणिका







सप्तविंशे वर्षे | जयति द्विजपतिमण्डलकलासमृद्ध्याऽयमेधमानोऽपि । | दिल्लीतः
तृतीयोऽङ्कः | वेलामनतिक्रामन् संस्कृतरत्नाकरो जगति ॥ | मार्च १९६५

# जगति विजयते संस्कृतभाषा

(कविरत्नम्, अमीरचन्द्र शास्त्री साहित्याचार्यः)

१

जगति विजयते संस्कृतभाषा ।
परिपूरितनगजगदभिलाषा ॥

२

या सकलानामपि विकलानां,
प्रथितबलानामपि नवलानाम् ।
नियतानामपि चलाचलानां,
भाषाणां कलयत्यभिलाषाः ॥

३

या विरञ्चिविरचितवरिवस्या,
फलिता मुनिजनतीव्रतपस्या ।
दर्शनदर्शितविषमसमस्या,
कविकल्पितनवरसपरिभाषा ॥

४

इह विज्ञानघनस्य स्पष्टिः,
चतुरधिकेह कलानां षष्टिः ।
इयं सनातनसंस्कृतियष्टिः,
स्वतः प्रकाशा, विधुतविनाशा ॥

५

नवजातोऽपि शिशुः पठतीमाम्,
'अम्मा, अम्मा' इति मृदु रटतीमाम् ।
वेद न कश्चिद् यद्गुणसीमाम्,
इति चकिता मतिरिह तृणपाशा ॥

# सम्पादकीयम्

## राजस्थान-संस्कृत-साहित्य-सम्मेलनम्

राजस्थान-संस्कृत-साहित्य-सम्मेलनस्य द्वादशाधिवेशनं २०२१ तमे वैक्रमाब्दे फाल्गुनमासस्यासिते पक्षे षष्ठीसप्तम्यष्टमी-तिथिषु रवि-सोम-भौमवासरेषु तदनुसारं २१-२२-२३ फरवरी १९६५ दिनाङ्केषु प्रदेशस्य भीलवाड़ाभिधे प्रसिद्धौद्योगिके नगरे सोत्साहं समपद्यतेति निवेदयतां महान् नः प्रमोदः।

अधिवेशनस्यास्योद्घाटनं राजस्थान-मुख्यमंत्रिभिर्माननीयैः श्रीमद्भिर्मोहनलालसुखाड़ियामहोदयैर्व्यधीयत, श्रीस्वरूपनारायण-पुरोहिताश्चाध्यक्षपदमलञ्चक्रुः।

अस्मिन्नवसरे वेदपरिषद्, दर्शन-परिषद् साहित्य-परिषद्, संस्कृत-शिक्षापरिषद्, आयुर्वेद-परिषद्, शान्ति-महायज्ञः, शलाका-परीक्षा, निबन्ध-प्रतियोगिता, सांस्कृतिक कार्यक्रमः, कवि-सम्मेलादिविविधबौद्धिकाः कार्यक्रमाश्च समपाद्यन्त।

सम्मेलनस्य मौलिकं संस्थानं विश्वविख्यातविदुषां महामहोपाध्याय-पदभाजां चतुर्वेदनिष्णातानामनेक-शास्त्रपारङ्गतानां श्रीगिरिधरशर्मणां निष्पादकप्रेरणया प्रबलेन च नेतृत्वेन राजस्थानवसुमतीमौलिमुकुटालंकारहीरत्वमावहति जयपुरनाम्नि-नगरे इतःसप्तदशवर्षेभ्यः पूर्वम् १९४८ खिस्तहायने अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य प्रादेशिकशाखारूपेण संस्थापितमासीत्। विद्वच्छिरोमणीनां महामहिम्नां राज्यपालानां श्रीसम्पूर्णानन्दमहोदयानां मते एतत्संस्था[illegible]संस्कृतज्ञानेकत्र संयोज्य युगानुसारेण ताञ्जागर[illegible] [illegible]ति, संस्कृतसाहित्यानुरागिणां राजस्थानमुख्यमन्त्रिणां 'सुखाड़िये'त्युपाह्वानां श्रीमोहनलालमहोदयानां [illegible] मते 'विबुधवाणीविकासमुद्दिश्य सुनियोजितया प्रणाल्यानिशं प्रगतिं कुर्वदास्ते'। संस्कृतानुरागिणां संघटनम्, प्रचार-कार्यम्, नवीनसाहित्यनिर्माणम्, दुर्लभग्रन्थानां प्रकाशनम्, प्राचीनग्रन्थरत्नानां शोधकार्यम्, सुरभारतीसेवानिरतमानसेभ्यो विविधैः प्रकारैः साहाय्य-वितरण[illegible] चेत्येतान्येतादृशानि चान्यान्युद्देश्यानि विद्यन्तेऽस्य संस्थानस्य।

अस्य प्रथमस्याधिवेशनस्योद्घाटनमेतज्जनकत्वम् वहद्भिः श्रीगिरिधरशर्मभिरेव जयपुरनगरे व्यधीयत तदानीं च श्रीरामधारिशास्त्रिणः सभापतिपदमलंचक्रुः तदनुचास्याधि वेशनानि यथाक्रमं बीकानेरे (१९४९), जोधपुरे (१९५०), अलवरे (१९५३), कोटानगरे (१९५४), सीकरे (१९५६), उदयपुरे (१९५७

भीलवाड़ाभिधे नगरे (१६६०), अजमेरनगरे (१६६१), रतनगढ़े (१६६२), सरदारशहरनाम्निनगरे (१६६४) सञ्जातानि ।

अस्मिन्समारोहे प्रायशस्त्रिशतसंख्याका विपश्चितः समभिलन् । अधिवेशनस्योद्घाटनं कुर्वद्भिर्विख्यातनामधेयै राजस्थान-मुख्य-मन्त्रिभिः श्रीसुखाड़ियामहाभागैरूर्जिताशयेन वचसाऽऽवेदितं यत् भारतस्य प्रतीकरूपैषा भाषा स्वकीयमेव बलमाश्रित्य प्राणिति । इतश्च प्राक् स्वागतमन्त्रिभिः श्रीचन्द्रशेखरशास्त्रिभिर्गिरमेनां सरलीकर्तुं प्रयत्नानामावश्यकता प्रादर्श्यत; सम्मेलन-स्वागताध्यक्षैः श्रीलक्ष्मीलाल-जोशीमहोदयैः श्रीसुखाड़ियाशासनकाले भाषाया अस्याः प्रगतिं विवृण्वद्भिः, संस्कृतानुरागिभिरस्याः निःस्वार्थसेवा कर्तव्येत्यभिहितम्, संयुक्तस्वागतमन्त्रिमहोदयैस्त्रिवेदीत्युपाह्वैः श्रीशिवकुमारशर्मभिरधिवेशनस्योपोद्घातः समालोकितः; सम्मेलनमन्त्रिभिः श्रीमोतीलाल-जोशीमहोदयैः संस्थानस्य प्रगति-विवरणं प्रास्तूयत, संस्कृताध्यापकानां चार्थिकीं स्थितिं द्रढयितुं प्रयत्नाः कार्या इति चाभ्यधीयत ।

अध्यक्षमहोदयैः पुरोहितेत्युपाह्वैः स्वरूपनारायणाभिधानैरमरभारत्याः प्रचारस्यावश्यकता प्रदर्शिता । अखिल-भारतीय-सम्मेलन-महामन्त्रिभिः मिश्रोपाह्वैः सुरभारतीविबुधेष्वाखण्डलायमानैर्मण्डनमहोदयैः स्वकीये उद्घाटनभाषणे राजस्थान-प्रदेशे संस्कृत-विश्वविद्यालयस्य घोषणायाः स्वागतं विहितवद्भिः संस्कृत-भाषाध्यापकानामध्यापनप्रणालीज्ञानस्यावश्यकतायाः विवेचनं विहितम् । उपविभागाध्यक्षैश्च स्वस्वविषयेषु पर्याप्तं प्रकाशं वितरद्भिस्तेषां प्रगत्युपाया निरूपिताः ।

आयोजितानि प्रमुखभाषणान्यस्मिन्नेवाङ्के यथाक्रममुद्रयामः । येन कार्य-प्रगतिः साफल्यं चावगम्येताम् । विबुधवाचोनिरन्तर-प्रगत्यै च बद्धपरिकराणां श्रीसुखाड़िया-महोदयानामन्येषां च महानुभावानामस्मिन् संस्थाने कीदृश्यभिरुचिः निष्ठा चेत्येतदखिलमितः स्पष्टं प्रतीयते; सर्वास्वपि च भाषासु ते देववाणीमग्रस्थाने प्रतिष्ठापयितुं कथं वा प्रयतन्ते, कथं च तत्सहयोगेन सप्तदशसंवत्सरपूर्वमारोपितं बीजमिदानीं तरुरूपेण सुपरिणाहिन्यग्रोधपादपं सम्वदतीति ज्ञापयन्तो वयमनुभवामो हर्षप्रकर्षम् ।

एतच्चाखिलमालोचयन्तो वयं समुदीरयामः—

राजस्थानं विजयतामुन्नयत्सुरभारतीम् ।

इति ॥



# राजस्थानसंस्कृतसाहित्यसम्मेलनस्य द्वादशाधिवेशने भीलवाड़ानगरे राजस्थानमुख्यमन्त्रीश्रीमोहनलाल सुखाड़िया महोदयैः कृतमुद्घाटनभाषणम्

(अनुवादकः—श्रीबदरीनारायण पंचोली)

अद्य संस्कृत-सम्मेलनस्यास्मिन्नवसरे मामामन्त्रितवन्तो भवन्तः, साम्प्रतमेव च मह्यं योऽभिनन्दनग्रन्थः प्रादायि तदर्थमहम्भवतां समेषामत्यन्तं कृतज्ञोऽस्मि। संस्कृतस्य विषये तथ्यपूर्णा वार्त्ता तु वर्त्तत एषा यद् यावत्कथ्यते ज्ञायते च यदत्र राजस्थाने किमपि महत्वपूर्णं कार्यज्ञातमस्तीति नाहं मन्ये। मुख्यास्ति वार्ता यत्कल्पनैषा ध्यानञ्चास्मदायाति यद् वयमस्मदतीतं गौरवशालिन्या दृशानवलोक्य, तन्नष्टभ्रष्टङ् कुर्मः; तदुपरि च वर्त्तमानस्य नवभवनञ्च निर्मिमीषामहे। तर्हि भविष्यति तद्भवनमप्येतादृशमेव यादृशङ्किमपि निराधारम्भवेद् भवनम्। अतीतवर्त्तमानयोः श्रेष्ठवस्तूनि सुश्रृङ्खलितानि भवेयुरित्यस्त्यावश्यकता। वयमतीतमवलोकयामास्मत्साहित्ये दर्शने च दृग्पताङ्करवाम, तर्हि तत्र विशिष्टं साहित्यं संस्कृत एव प्राप्तुं शक्नुमः। दर्शनशास्त्रस्यायुर्वेदस्य विषयान्तराणाञ्च ये सन्ति विशिष्टाः ग्रन्थास्ते सन्ति सर्वेऽपि संस्कृतभाषायामेव लिखिताः। सस्कृतन्न कस्यापि प्रदेशविशेषस्य जनपदस्य वास्ति सम्पदपि तु समस्तस्य देशस्य।

समधिगते स्वातन्त्र्येऽस्मिन्नेव दिने विधानमनुसृत्याभवद्भारतमेकीभूतम्। स्वीयमेतद्राजस्थानमेवावलोकयामस्तदा ज्ञायते यदत्रासीज्जयपुरराज्यं पृथक्, मेदपाटराज्यम्पृथक्, मरुस्थलादिराज्यानि च पृथक् पृथक्। तथैव देहल्यामपि कर्हिचिन्मौद्गलशाशनमन्यस्मिन् काले गुप्तसाम्राज्यमन्यदा तु मौर्यसाम्राज्यादीन्यासन। दक्षिणेऽपि पृथक्पृथग्राज्यान्यासन्। राजनैतिक-दृशा हर्षशोकयोः समयमतिरिच्य राज्यमेतद् विभिन्नेषु शकलेषु विभक्तमासीत्। शासनदृशा स्थीयतान्नाम शकलेषु भारतस्परमस्ति वस्तुत एकमेवराज्यम्। एतन्निर्देशिका याऽस्ति वार्त्ता साऽस्ति-यदस्माकन्धर्मः संगीतं, विविधा कलाश्चैतेषामाधारश्चासीत्संस्कृतभाषा। दिनेषु तेषु समस्तेऽपि भारते भवति स्म प्रचारकार्यम्; तदर्थम्महान्तो विद्वांसः समग्रे देशे गत्वा गत्वा कुर्वन्ति स्म प्रचारकार्यम्।

संस्कृतन्नानाविधनिम्नोन्नतस्थितीः परिभुज्यापि समायाति। गौराङ्गाणां शासनकाले संस्कृतन्न कस्यापि कृपया जीवितमतिष्ठदपि तु स्वशक्त्यैव स्वसत्तां सुरक्षितवत्। अस्मदाध्यात्मिकदर्शनविचारधारायाः संस्कृतसम्बद्धत्वात्, जनेषु धार्मिकभावनायाः वर्त्तमानत्वात् तस्याश्च संस्कृतसंबद्धत्वाज्जीवन्त्यतिष्ठत् समग्रेऽपि च भारते मिलत्येषा सर्वेष्वप्यस्मत्संस्कारेषु। शतशः वर्षेभ्य आंग्लभाषा राष्ट्रभाषात्वेनात्र स्थितिमकरोत्, परं यस्यां भाषायामस्ति समृद्धं साहित्यं सास्ति भाषा संस्कृतभाषैव। अद्यापि श्री टी-टी-कृष्णमाचारिमहोदयाः मांद्रासिका सन्ति संस्कृतस्य बहुविज्ञाः. डा० चिन्तामणि-देशमुखमहोदयाः, श्रीनम्बूद्रिपादमहोदयाः, डा० के. एल. रावमहोदयाः श्री अनंतशयनमायंगरमहोदयाश्चापि सन्ति संस्कृतस्य बहुज्ञा विद्वांसः। एतादृशोऽनेके सन्ति येऽन्यप्रान्तेषु वसन्ति परं संस्कृतप्रभावेणैव तान्प्रति न कोऽपि वक्तुं प्रभवति यदिमे उत्तरभारततः दक्षिणभारतमागताः दक्षिणत उत्तरम्वागता इति।

कोटिशस्तु जनाः संस्कृतन्नावबोधन्ते, पर यदा संस्कृतस्य श्लोकाः समुदीर्यन्ते तदा तेषामपि मनस्यानन्दस्य प्रेरणायाश्चानुभूतिर्भवति, तैश्च संस्कृतेन साकं स्वत्वमनुभूयते। पुरा संस्कृतभाषया देशे प्राप्तमासीत्प्रोन्नतं स्थानम्। अतोऽद्यापि चेद् देशे वार्त्तैषा विचार्यते यत् "संस्कृतभाषा भारतस्य राष्ट्रियभाषा भवेत्" इति तर्हि नास्त्येषातिवार्ता निर्मर्यादा वा। यतोऽस्ति बीजन्तत्पृष्ठतः, यदस्माकन्देश एतावान्महानस्ति यस्यान्तिकम्पुरातनसम्पद्वैपुल्यमस्ति परमप्राचीनसंस्कृतिसम्पन्नोऽस्ति च देशोऽयम्। यदानेकशः समायाति भाषायाः समस्या समक्षन्तदा विचारयामि यदमुकी शब्दावल्येव राष्ट्रभाषायाः शब्दावली भविष्यतीति मत्वा प्रचलितुन्न शक्यते, राष्ट्रभाषा तु लोकप्रियतामनुसृत्याहरहो वर्धते समृद्धिशालीनी च भवति। परन्न काश्चन विप्रतिपत्तीः समाश्रित्य कस्यापि राष्ट्रभाषा माभूदिति नास्ति समीचीनम्। अस्माकम्मान्यतैषा जायते यद्वयं स्वभाषानिर्माणापेक्षया कामपि वैदेशिकीं भाषां राष्ट्रभाषापदे प्रतिष्ठितां रक्षेमस्तर्हि नैतदस्ति गौरवास्पदमिति मन्ये।

वयं साधारणातिसाधारणमपि देशं कमपि गच्छामस्तर्हि तत्रत्याः तद्देशभाषायामेव समालपन्ति। परं वयं वैदेशिक्याम्भाषायां ब्रूमः। एतत्तु युक्तमस्ति यदनेन तेभ्यो ग्रहणसौकर्यञ्जायते, परमन्ततो गत्वा प्रतीयते दौर्बल्यमेवास्त्यास्माकीनमिति। एतद्राजनीतिदृशा न विचारणीयम्, सा दृगेकाखिलभारतीया दृग्भवेत्, तत्रापि च यया जगति सम्मानमास्माकीनमभिवर्धेतैतादृशी दृष्टिर्भवेत्, एतन्न कस्मिन्नपि भारस्वरूपेणाधानदृशापि तु विचारदृष्ट्योच्यते। राष्ट्रभाषाविषये न वयं नवरूपेन विचारयामोऽपि तु स्वातन्त्र्यप्राप्तेः प्रागपि राष्ट्रभाषाविषये व्यचारयाम। वयं समयसरणिमनुसृत्याग्रेसरणस्य स्थाने पृष्ठङ् गच्छेम तर्हि नास्त्येतदुचितम्। विषयेऽमुष्मिन्नस्माभिः विचारणीयन्न कस्यापि मनसि भावनैषा भवेद्यद् वयमहिन्दीभाषिणो राष्ट्रनाम्नि जनान्यापेक्षयाधिकलाभान्विता भवेम। राष्ट्रभाषैषा नासीत्तथा नूतनमेव परीक्षणाङ्क्रियत इति न शतशः स्थिती उपभुज्यापि, अनेकैराक्रमणैरपि च नाभवत्किमपि परिवर्त्तनन्तथा भाषयानया स्वस्थानं सुरक्षितमित्यस्त्यस्मद्विचारणीयं महत्त्वपूर्णञ्च।

संस्कृतस्य समृद्ध्यापादनविषयेऽहं स्वीयमेवानुभवं कथयामि-यन्मयातीतविषये यदा विचार्यते तदा मन्मस्तिष्के संस्कृतस्य स्मृतिर्जायते, तदतीतन्नोच्छिद्येतेति संस्कृतस्य समृद्धिर्विधेयैवेति। मत्कथनस्याशय एषः यदद्यतने किमस्य स्वरूपम्भवेत्तथा जगते देशाय च वयं संस्कृतेन किं दातुं शक्नुमः, तथा केन प्रकारेणास्याभिवृद्धिः शक्यते, विषयेऽमुष्मिन्नस्माभिर्विचारणीयम्। संस्कृतस्य यानि पुरातत्वमूल्यानि सन्ति, तानि दृग्पथि संस्थाप्य संस्कृतम्विकसितङ्कत्वाग्रेवर्धनीयम्। पूर्वं राजस्थान-विश्व-विद्यालये संस्कृत-विभागस्थापनस्य (फेकल्टी)-वार्ता समागता परं साम्प्रतन्तु संस्थाप्यते संस्कृत-विश्व-विद्यालयोऽतः नास्ति तदपेक्षा। कामये स एतादृशो विश्व-विद्यालयो राजस्थाने भूयाद् यस्मिन्संस्कृतायुर्वेदादयो विषया भवेयुः, परिषदः प्रार्थनाप्राप्तौ विषयेऽस्मिन्नग्रे सर्तुमीहामहे। या चतुर्थी पंचवर्षीया योजना सङ्कल्प्य प्रेष्यते, वर्तते तस्याम्प्रावधानं संस्कृत-विश्व-विद्यालयार्थन्द्रव्यराशेः।

मत्सम्मुखमसावपि प्रस्तावः प्रस्तावितो यत्संस्कृतस्य शास्त्रिण आचार्याश्च ये विभिन्नेषु राजकीयविद्यालयेषु नियुक्ताः सन्ति ते पाठयन्ति यथा विषयान्तराध्यापकाः, किन्तु तेभ्यो विषयान्तराध्यापकापेक्षया वेतनस्य शृङ्खलैका न्यूना दीयत इति। परमद्य ज्ञात्वैतत्प्रमोदिष्यन्ते भवन्तो यदद्यैवार्थसचिवादिभिः संलप्यैतन्निश्चितङ्कृतम् यद् ये संस्कृताध्यापकाः नवमीं दशमीम्वा कक्षामध्यापयन्ति तानपि विषयान्तराध्यापकनिभानेव मत्वा तेभ्योऽपि विषयान्तराध्यापकसदृश्य एव वेतनशृङ्खलाः दास्यन्ते। छात्रवृत्तिविषयेऽपि प्रस्तावितं-यत्संस्कृतछात्रेभ्यो न्यूना दीयते छात्रवृत्तिरिति। मन्येऽहमस्मिन्नपि विषये परिवर्त्तनम्विधेयमिति। सहायतायास्वीकृतिसमितेः (ग्रांएट इन एड् कमेटी) कर्त्तव्यमस्ति यत्साम्प्रतमिव प्रारम्भत एव छात्रवृतिराशिम्पर्याप्तान्निर्धारयेत्। यदा च सहायतास्वीकृतिवृद्धये च विचारः क्रियते, तद्विषये समये समये श्रीमद्भिः निर्णयाः प्राप्स्यन्ते। भवद्भिः कार्यवाहत्वे श्रीलक्ष्मीलालजोशीनिभा योग्यतमाः सन्ति नियोजिताः ये वर्षे त्रिचतुर्वारस्वा स्मारणेन विना नावतिष्ठन्ते।

भवद्भिर्भरियानुरागः प्रकटीकृत एतदर्थमहङ्कृतज्ञोऽस्मि। उच्चतरविद्यालयेषु संस्कृतस्य प्रगतिर्विधेया वर्त्तते, कार्यमेतद्गौरवास्पदमस्ति। अस्माकं हृदयेषु प्रगतेरस्या भावना धारणीया। आत्मानन्दयनीयताङ्गतमिव मत्वा न किमपि प्रस्तोतव्यम्। स्वप्रस्तावं सबलं गौरवपूर्णपरिपाट्या च प्रस्तूयन्ताम्, कर्हिचिद्दयनीयस्थित्या। सर्वकारः यत्कार्यङ्कुर्यात्तत्कृपालुताम्मत्वा न कुर्यादपि तु कर्त्तव्यमिति मत्वा कुर्यात्। भावनैषा भवितुमर्हति सततम्।

मन्मस्तिष्क एषैवास्ति कल्पना यदस्मन्निधेः सुरक्षायै विकासाय च केचन प्रयत्ना अवश्यङ्करणीयाः। अद्यतने केन प्रकारेण संस्कृतस्यावश्यकता जनैरनुभूयेत तथा विधेयम् संस्कृतेनास्माभिः देशान्तरेभ्योऽपि किञ्चिद् देयम्। यदि च बहिर्देशात्कोऽपि जनोऽस्मद्देशमागच्छत्तदा किमासीत्प्राचीनन्दर्शनम्, कासीत्प्राचीना संस्कृतिरित्यादि विषयान्नवबुध्येत, समागच्छेच्चाध्येतुम्। तज्जिज्ञासाश्च संस्कृत-विश्व-विद्यालयाः स्वगौरवन्निभालयन्तं प्रशमयेयुः। तद्भविष्यत्येतन्महत्त्वपूर्णङ् कार्यमित्येभिः शब्दैः सह करोम्यहम्भवदधिवेशनस्य समुद्घाटनम्।



## राजस्थान संस्कृतसाहित्य सम्मेलनस्य द्वादशाधिवेशनावसरे स्वागताध्यक्षाणाम्

# श्रीमतां लक्ष्मीलाल-जोशीमहोदयानाम् स्वागतभाषणम्

अयि सुरभारतीरसिका मान्या विद्वांसो महानुभावाश्च !

राजस्थान-संस्कृत-साहित्य-सम्मेलनस्यातीव कृतज्ञा वयं यदनेन सम्मेलनेन पुनरस्मिन्नगरेऽधिवेशनस्य स्वीकृतिः प्रदत्ता । भीलवाडानगरस्यास्य परमं सौभाग्यमिदं यत्संस्कृतज्ञानां विदुषामत्र स्वागतकार्येऽयं स्वर्णावसरो द्वितीयः समुपलब्धः । अस्य प्रदेशस्य प्रतिनिधिरूपेणाहं भवतां सर्वेषां हार्दिकं स्वागतं करोमि, आशासे च यदत्रभवतां सर्वेषां अत्रोपवेशनं सुखमयेन सौहार्देन संस्कृतशिक्षायामुदारदृष्ट्या चात्यन्तं लाभप्रदं भविष्यतीति ।

विज्ञानस्य तत्सम्बंधिनामन्यविषयाणां निरन्तरोन्नत्या संस्कृतस्य तत्सम्बंधितान्येषां विषयाणां चाध्ययनेस्य रुचिः सर्वत्र राष्ट्रेऽस्मिन्न्यूनतामधिगच्छति । परमद्य शिक्षायाः प्रसारः एतावदौन्नत्यं भजते यत्तेन प्रत्येकस्मिन् विषये छात्राणां संख्या निरन्तरं प्रगतिपथमारूढाऽऽस्ते । अनेन दृष्टिकोणेन समं अनेकेषु संस्कृतविद्यालयेष्वपि छात्रसंख्या पूर्वापेक्षया वृद्धिं गता एव । परमेते विद्यालया एतादृशाः सन्ति यत्र प्रधानाध्यापका अध्यापकाश्चान्ये छात्रान् स्वविद्यालयेषु समाकृष्टुं तथाऽऽधुनिकप्रणाल्या शिक्षां प्रदातुं रुचिवैशिष्ट्यं विदधति तत्र विविधसाधनसम्पादनाय च चेष्टन्ते । उदाहरणार्थं यथा जयपुरनगरस्यान्तिके महापुरा-संस्कृतविद्यालयस्य नाम प्रस्तौमि यत्तत्र स्वल्पायामपि जनसंख्यायां समीपस्थ ग्रामाणां छात्राः संभूय संस्कृतं पठन्ति शोभना च तत्र छात्राणां संख्येति ।

तथैव मनोहरपुरस्य संस्कृत-विद्यालये यत्रत्याः प्रधानाचार्या अस्माकं सम्मेलनस्य मन्त्रिणः सन्ति, तत्रापि छात्रसंख्या पर्याप्ता विद्यते । एतादृशा अन्येऽपि कतिपये विद्यालयाः सन्ति ।

सर्वकारश्चेत् नूतनान् माध्यमिक-विद्यालयानुद्घाटयेत् तदा एतदवधेयम् यत् यत्र स्थाने वातावरणो वस्तुस्थितिश्चानुकूला भवेत् तत्र स्थाने माध्यमिकविद्यालयाः संस्कृत-माध्यमिक विद्यालयानां रूपं प्राप्नुयुः । तत्कृते यदा निश्चितमेकं प्रतिशतं भवेत्, तर्हि संस्कृतस्य

प्रचारकार्ये साहाय्यं समुचितं भविष्यति। यतो हि संस्कृतमाध्यमिकोच्चमाध्यमिक विद्यालयेषु ते सर्वे एव विषयाः पाठ्यन्ते येऽन्यमाध्यमिकोच्चमाध्यमिक-विद्यालयेषु पाठ्यन्ते। केवलं संस्कृतभाषैव तत्र समधिकं महत्त्वं भजते प्रतिवर्षं नियतासु माध्यमिक-पाठशालासु-उच्चकक्षासु संस्कृतच्छात्राणामपि संख्या वृद्धिं गमिष्यतीत्य शास्यते। विशेषतो न्यूनतेयमुच्च-कक्षास्वेव दरीदृश्यते, यस्य कारणमुच्चतर-माध्यमिक विद्यालयेषु संस्कृत-विषयस्याभावस्तथाऽऽचार्योत्तीर्ण-शिक्षकाणाँ बी. ए. एम. ए. स्तरानुसारं वेतनस्तरस्य नितान्तमभाव एव। योग्यताया या समानता संस्कृत समितेरनुरोधेन राज्यसर्वकारेण स्वीकृताऽऽसीत् तस्यां घोषणायां शास्त्र्यादिपरीक्षासु आँग्लभाषया सहोत्ती-र्णासु यद् बन्धनं कृतमासीत् तेन सौविध्येनापि न कोऽपि लाभविशेषः समजनि, यतो हि आँग्लभाषया महोपाध्याय शास्त्र्यादि-परीक्षास्वल्पा एवोत्तीर्णा-श्छात्रा दृष्टिपथमायाताः। हर्षस्यायं विषयो यदस्माकं सर्वकारोऽनावश्यकं मन्यते आंग्लभाषाया अनिवार्य-त्वमधुना। येषूच्चविद्यालयेषु संस्कृतमेकमैच्छिकरूपेण पाठ्यते, उच्चतर माध्यमिक विद्यालयेषु तेषु परिव-र्तितेषु प्रायः संस्कृतस्य विषयस्तेभ्यो विद्यालयेभ्योऽ-पसार्यते, यतो हि विद्यालयस्य बहूद्देशीय (मल्टीपर्पज़) कथनस्य प्रवृत्तिः सामान्यतया रुचिकरा प्रतीयते स्वल्पानां वरिष्ठाध्यापकानां नियुक्तिर्विधायेति। परमनेन संस्कृत-शिक्षाया महती हानिः सञ्जाता। जयपुरनगरे-ऽपि वरिष्ठाध्यापकः संस्कृतस्यैच्छिक-विषयस्य न विद्यते एकस्मिन्नपि राजकीयोच्चतरमाध्यमिक विद्यालये अन्यत् किं, बालिकाभ्यः कन्याविद्यालयेषु संस्कृतस्य-पठनमभिरोचते, परं ताभ्योऽपि कस्मिंश्चिदपि विद्यालये संस्कृतस्य वरिष्ठाध्यापका न नियुज्यन्ते। एतादृश्यां परिस्थितौ निराशाजनकमेवेदं प्रतिभाति यद् विश्व-विद्यालये तत्सम्बन्धितमहाविद्यालयेषु वा संस्कृतच्छा-त्राणां संख्या वृद्धिं यास्यति ह्रासं वा गमिष्यतीति सन्देहास्पदमेव।

आशास्यते शीघ्रमेव सर्वकारस्य ध्यानमाकृष्टं भविष्यति। यत्र च स्थाने पञ्चाशाः छात्रा एवोच्चतर-माध्यमिक-विद्यालयेषु संस्कृतमभिवाञ्छेयुस्तत्र तत्र स्थानेषु शीघ्रमेवागामि-जुलाईमासत एव वरिष्ठाध्याप-कान् व्यवस्थापयितुं कतिपयानि पदानि सुरक्षितानि करिष्यन्ते सर्वकारेणेति।

संस्कृतपाठशालानां स्थितिरपि न मनागपि समीचीनी, अतश्छात्रास्तत्र प्रवेशार्थं ऽर्थम् निम्नकोटेः शिक्षासम्प्राप्तौ भयं मन्यमानास्तिष्ठन्ति। यद्यपि पाठ्यक्रम-दृष्ट्या प्रवेशिकापर्यन्तपाठशालासु तथान्योच्चविद्या-लयेषु न कोऽपि विशेषो भेदः। तत्र सर्वविषयाणां नाध्यापकानां योग्यतानुरूपमुत्तरदायित्वरूपाव्यवस्था नैव वा विद्यालयभवनोपस्करणादीन्यावश्यकतानुसारं विद्यन्ते। अस्य पूर्त्यै सर्वकारेण सर्वथा प्रयत्नो विधेय इति।

सहायताप्राप्तशिक्षणसंस्थानां स्थितिस्त्वितोऽप्य-धिकगम्भीरतरा शोचनीया च। विशेषार्थिकसाहाय्येन सर्वकारश्चेन्न शिक्षणसंस्थास्वासु शीघ्रं न किंचिदपि

परिवर्तनं विधातुं पार्येत, तदाऽवश्यमेवैते विद्यालया सर्वकारविद्यालयाभवेयुः प्रबन्धोऽपि सर्वथा सर्वकाराधीन एव स्यात्। यतो हि पुण्यकीर्तिभाजः श्रेष्ठिनः पुरा पुण्यलाभार्थमेव संस्कृतपाठशालानां स्थापनां उद्घाटनं वा बहु मन्यन्ते स्म, परमद्य तेषां सन्तत्यै नैतादृशः समाकर्षणः प्रतिभाति। ते हि प्रकारान्तरेण सामजिकभिया वा यथकथञ्चिद्दानं ददति। सात्विकविद्यादानार्थं द्रव्यराशेर्व्यये ते न विश्वसन्ति।

संस्कृत-विद्यालया ये द्रव्यदानादिभिः सार्वजनिकरूपेण प्रचाल्यन्ते संख्यायां तेऽतीव न्यूना एव, तेषु बीकानेरस्थः शार्दूलसंस्कृतविद्यापीठः, उदयपुरस्य आदर्शविद्यामन्दिरम्, तथा भीलवाडास्थो राजस्थानसंस्कृतविद्यापीठादयः उल्लेखनीयाः सन्ति। परं द्रव्यदानादीनां स्रोतांस्यपीदानीं समाप्तिं गतानि। ये जना पूर्वं द्रव्यदानादितत्परा आसन् तेऽपि स्वतन्त्रता-प्राप्तेरनन्तरं प्रत्यक्षं नकारात्मकमुत्तरं ददति। कथयन्ति च जनतायाः सर्वकारः अधुना स एव सार्वजनिकसंस्थानां प्रबन्धं कुर्यादिति।

आधुनिकधनकुबेरादयः नैतद्विजानन्ति यत् समाजशिक्षायाः सर्वोऽपि भारः सर्वकारोपर्येव पतेत् तदा शिक्षाया स्थितिर्विषमा सम्पद्येत। शिक्षायां परीक्षणान्येकानि नूतनाश्च प्रयोगा यादृशी सत्यनिष्ठासेवा च यावन्मात्रायां सार्वजनिकक्षेत्रे संभवा वर्तते, तादृशी तद्विशिष्टा चाशा सर्वकारप्रबन्धेन भवितुमशक्या। अन्येषु बहुत्र देशेष्वपि शिक्षायाः समधिकं भारं समाज एव वोढुमर्हति; भारते चापि ब्रिटिशसर्वकारेण शिक्षायाः प्रसारः स्वनूतनविधिना प्रारब्धः, तत्पूर्वं शिक्षायाः समस्तो भारः समाजस्कन्धेष्वेवासीत्। परमद्य स्थितिः परिवर्तिता; विशाले स्तरे सार्वजनिकशिक्षणं विशेषतोऽनिवार्य-शिक्षाप्रदानं सर्वकाराधीनमेव वर्तते।

सर्वकारेण संस्कृत-पाठशालानामेतादृशं वर्गीकरणम् स्वीकृतं येन संस्कृत-शिक्षालयेषु न्यूनतमाऽऽवश्यकतानां पूर्तिं शीघ्रं विधातुमाशास्यते। यदीयं नीतिः समुचिता व्यवहारिकरूपेण निर्वाह्यमाना अवगम्येत यत् शिक्षायाः सर्वाङ्गानां समुचितं पोषणं समानरूपेणाग्रेषणं सर्वकारस्य कर्तव्योऽस्ति तदा पराङ्मुखशिक्षाक्षेत्रस्य यस्मिन् संस्कृतमपि सम्मिलितमास्तेऽचिरमेव समुचितो विकासो भविष्यति। पूर्णमाशास्यते यद्वर्तमानमुख्यमन्त्रिमहोदयानां शासनकाले संस्कृतशिक्षाया व्यवस्था पूर्णतया समुन्नता भविता यतो यावती समुन्नतिरस्मिन् समये अस्याः संस्कृतशिक्षाया दृग्गोचरा जायते, एतत्सर्वं महानुभावानमेतेषामेवोदारदृष्टेः सुपरिणामो वरीवर्ति।

संस्कृत शिक्षया सममाधुनिकविषयाणां सन्निवेशो विहितः पाठ्यक्रमे; परं यावत् संस्कृतपरीक्षोत्तीर्णानामभ्यर्थिनां राज्यसेवायां प्राथमिकं ध्यानं नापेक्षते तावत्पर्यन्तं संस्कृतपरीक्षासु जनताया समाकर्षणमत्यन्तं कठिनमेव। संस्कृतविदुषां कृतेऽनुसूचित-जातीयवत्स्थानसुरक्षणे न कोऽपि प्रश्नः; परन्तु भृतिविधायिकानामधिकारिवर्गाणां दृष्टिकोणः संस्कृतज्ञेभ्यः विज्ञेभ्योऽत्यन्तमनुदारात्मक एवास्ति। कतिपयवर्षपूर्वं केवलं संस्कृतभाषाध्येतॄणां व्याकरणन्यायादिपाठकानां शास्त्रादिपरीक्षोत्तीर्णानां विदुषामिवाधुनिकविषयाध्येतृणा-

मपितेऽधिकारिवर्गाः कूपमण्डूकानां स्थितिं मन्यन्ते। तेषां दृष्टिकोणमिममपाकर्तुं सर्वकारस्य संस्कृत शिक्षायाः प्रोत्साहनार्थं या नीतिर्निश्चिताऽस्ति तां स्पष्टयन् यथासम्भवं संस्कृतपरीक्षोत्तीर्णानां राजसेवासु संस्थापनस्य नीतिमङ्गीकर्तुमधिकारिवर्गस्य ध्यानाकर्षणमत्यन्तमनिवार्यम्। अतएव निरन्तरमनुरुध्यते सर्वकारो यदेतादृशीं राजाज्ञां शीघ्रं प्रसार्यास्माकमुत्साहवर्धनार्थमुपकरोतु। यावदर्थकरी न संपद्येतेयं संस्कृतशिक्षा तत्संस्थानां च स्तरोऽपि समानरूपात्मको न भविष्यति तावत्कालमन्यैरुपायैः संस्कृतशिक्षाया आकर्षणं निराशाजनकं भवेत्। परं सौभाग्यमेतत् यदस्माकं मुख्यमन्त्रिमहोदया ये संस्कृतस्य सम्मानार्थं उन्नत्यर्थञ्च संस्कृतविश्वविद्यालय-सदृशीं संस्थामुच्चस्तरात्मिकां अस्मभ्यं प्रदातुं बद्धपरिकराः सन्ति। तेभ्यो महानुभावेभ्यः इदमाशास्यते सहजतया यदपेक्षाकृतस्वल्पे एव व्यये पाठशालानां स्तरोन्नतौ तदावश्यकतानां सम्पूर्तौ च ते न किञ्चिदपि काठिन्यमनुभविष्यन्तीति।

मान्यवराणां मुख्यमंन्त्रिमहोदयानां समेषां समवेतानां विदुषां च पुनर्हार्दिकं स्वागतं करोमि सम्मेलनस्य साफल्याय प्रार्थये भगवतश्चरणयोरिति शम्।





# राजस्थान-संस्कृत-साहित्य-सम्मेलनस्य द्वादशाधिवेशने भीलवाड़ानगरे राजस्थान-विधानसभा-सदस्यानां श्रीस्वरूपनारायणपुरोहितानामध्यक्षपदेन कृतं भाषणम्

(अनुवादकः—बदरीनारायण शर्मा [पंचोली])

बालार्कायुतसप्रभां करतले लोलम्बमालाकुलां,
मालां सन्दधतीम्मनोहरतनुं मन्दस्मितोद्यन्मुखीम्।
मन्दं मन्दमुपेयुषीं वरयितुं शम्भुं जगन्मोहिनीं
वन्दे देवमुनीन्द्रवंदितपदामिष्टार्थदां पार्वतीम्॥

मान्याः मुख्यमन्त्रिमहोदयाः! स्वागताध्यक्षाः! समुपस्थिताः विद्वांसः! धृतसंस्कृतानुरागाः देव्यः! सज्जनाश्च!

प्रसन्नतायाः वर्तत एषा वार्ता यदद्य राजस्थान संस्कृत-साहित्य-सम्मेलनस्य भीलवाड़ानगरे समायोजितेऽस्मिन्द्वादशाधिवेशने वयमेकत्रीभूताः स्मः। सम्मेलनसदस्याः पुनः मां सभापतिपदे निर्वाचितवन्त एतदर्थमहन्तेषां हृदयेन कृतज्ञोऽस्मि। सत्स्वपि नैकेषु

विद्वत्सु केवलमनेनैव हेतुनाहमत्रोपावेशितोऽस्मि यदहमस्य सम्मेलनस्य साम्प्रतं वर्ते सभापतिः।

समग्रे देशे राजस्थानस्य भूस्तस्यामपि च मेदपाटस्य मेदिनी स्वात्मगौरवाय वीरतायै च प्रारम्भत एवास्ति विख्याता। अनयैव क्ष्मया महाराणाप्रतापनिभाः वीराः मीरासदृश्यो कवयित्र्यश्च प्रसूताः। भूमेरस्यैवैतन्नगरन्न केवलमौद्योगिकमपि तु संस्कृतानुरागदृशापि स्वम्महिमानं रक्षति। प्रान्तेऽस्ति नगरमेतदेव प्रथमं यत्र सम्मेलनस्य महाधिवेशनं द्वितीयवारं समायोजितम्वर्त्तते, एतदर्थमस्यैव क्षेत्रस्य "मांडल" निवासिनः श्री लक्ष्मीलालजोशीमहोदयाः ये न केवलं संस्कृतानुरागाय तत्पोषणाय च प्रसिद्धा अपि तु भवन्ति ह्येतादृशाङ्कार्याणां संयोक्तारोऽपि, सन्ति ते वृद्धिवादार्हाः।

सौभाग्यमस्ति यच्छ्रीमोहनलालसुखाड़ियामहोदयैरस्योद्घाटनङ्कृतम्, अनेन न केवलं तेषां संस्कृतप्रेमैव प्रकटीभवति, अपि तु राजस्थान-मुख्यमन्त्रित्वाद्राजस्थान-संस्कृतजगतेऽधिवेशनेनानेन नानाविधाना मास्थानाम्पूर्त्तेरासाराः प्रतीयन्ते। श्रीसुखाड़ियामहोदयाः १९५७ सप्तपञ्चाशदुत्तरैकोनविंशतितमख्रिस्ताब्दस्य उदयपुरनगरे समायोजिताधिवेशनत एव सम्मेलनेन सह वर्त्तन्ते, काले काले च संस्थानमेतत्संस्कृतसम्बद्धसमस्यासमाधानबलं ददति। एतेषां सक्रिययोगदानेन सम्मेलनकार्यकर्तृभिरनवरतम्प्राप्यते बलम्।

संस्कृते भारतीया संस्कृतिरस्ति सुरक्षिता, वेदाः, दर्शनानि, पुराणानि, उपनिषदः, इत्यादिग्रन्थानां सृजनमस्त्यस्या निक्षेपः। परमेतासां कृतीनां जनसाधारणेषूपयोजनेऽनवरतं सुरक्षायाञ्चावधानन्न तावत् स्वाभाविकं भवितुं शक्नोति, यावन्न जनसाधारणेषु भवेत्संस्कृतज्ञानम्। संस्कृतं जनभाषा भवेदिति विषये प्रयत्नमेवास्ति संस्कृत-विदुषाम्परमङ्कर्त्तव्यम्। तच्च नासम्भवमस्ति परमस्ति यत्नसाधनीयमवश्यम्।

## संस्कृतं राष्ट्रभाषा—

पुरा संस्कृतमस्मद्देशस्यासीद्राष्ट्रभाषा, शिक्षिताः सभ्याश्च संस्कृतम्भाषन्ते स्म, तथानया परस्परं व्यवहरन्ति स्म। केचन तथ्येऽमुष्मिन्न विश्वसन्तीति तेषां भ्रान्तिरेव। साम्प्रतं द्विप्रतिशतञ्जनाः आंग्लभाषां जानन्ति, परन्नानाप्रदेशान् शृङ्खलितान् करोति, वातावरणञ्चांग्लभाषामयमवलोक्यते। तत्किमसौ भ्रान्तिविषयो यदतीते स्वर्णिमे वैदिकयुगे संस्कृतभाषा राष्ट्रभाषासीदिति ? नासौ भ्रमोऽपि तु तथ्यम्। समयपरिवर्तने पाश्चात्यानां शासनं सञ्जातम्। गौराङ्गानां न संस्कृतम्प्रति तावन्तावास्तां श्रद्धादरौ यावन्तौ ग्रीकलैटिनम्प्रति। अतः तेऽस्यै केवलं पूज्यभाषारूपमेवादुः संस्कृतभाषायाः शिक्षा-प्रचार-प्रसार-संवर्धनाद्युपायेषु नावधत्तम्; फलतो जनसाधारणेष्वस्याः शैक्षणिकः प्रचारः न्यूनतामगच्छत्, परं संस्कृतगंगायाः प्रवाहोऽविरतं प्रवहमानमस्ति, तथा साम्प्रतमपि देशस्य प्रत्येकस्मिन् ग्रामे कोऽपि संस्कृतज्ञः मिलति. कारणमस्यास्ति यत् संस्कृतन्देशस्यास्य जीवनेऽनेन प्रकारेण सुस्यूतमभवत् यत्तत्कथंचिदपि पृथग्भवितुं न शक्नोति।

संस्कृतन्तु देशस्यास्यामूल्यः कोशोऽस्ति, अध्ययनेनास्य राष्ट्रस्यास्यैतिह्यस्य वस्तुज्ञाने परमं साहाय्यं प्राप्यते।

प्रायशोऽवलोक्यते यत्कस्याश्चिदपि भाषायाः पठनस्य मूल्यांकनं तत्सम्बद्धसामाजिकोपयोजनैः क्रियते। चेदनया दृशा संस्कृतसाहित्यं विचारयामस्तर्हि स्पष्टमेतद् भविष्यति यत् संस्कृतन्न केवलमेका भाषैव, न च केवलं तस्य साहित्यं लेखकानाङ्कवीनाञ्च रचना-संकलनमेवापि त्वस्मिन् भारतीयात्मा प्रकटीभवति। आस्माकीनञ्जीवनचिन्तनमस्माकं सामाजिकानान्धार्मिकानुष्ठानानामुत्पत्तिः सहस्रशो वर्षेभ्यश्चास्माकीन-सांस्कृतिकपरम्पराणाङ् क्रमिको विकासः चेत्क्वाप्यव-लोकयितुम्प्राप्यते, तत्संस्कृत-साहित्य एव। इतरशब्देषु संस्कृतभाषा तत्साहित्यञ्च भारतनिवासिनो जनसमुदायस्य सामाजिकगतिविधीनां तद्बौद्धिकप्रगतेश्चैतिह्यमस्ति।

## विदेशेषु संस्कृतस्य प्रसारः :—

अस्मद्देशस्य विचारप्रवाहोऽस्मत्संस्कृतिश्चैकदा एशियेति नामधेये भूभागे स्थितेष्वखिलेषु देशेषु व्याप्नुताम्, यतोऽस्मच्चिन्तनं संस्कृतोपनिबद्धमेवासीदिति संस्कृताध्ययनमपि समस्तेषु एशियाभूभागस्थदेशेषु व्याप्नोत् नैकशताब्दिपर्यन्तं संस्कृतस्याध्ययनमेकस्या अन्तर्राष्ट्रीयभाषायाः स्वरूपेण प्रचलितमभवत्। अनेन प्रकारेण संस्कृतस्य एशियाभूमागस्थदेशैः सह सम्बन्ध आसीत्। साम्प्रतमपि विश्वस्यानेकेषु देशेषु संस्कृताध्ययनस्य व्यवस्था वर्त्तते, प्रसन्नतायाश्च विषयोऽस्ति यदस्यां व्यवस्थायामुत्तरोत्तरं शोधनम्प्रचलति।

## संस्कृतं राष्ट्रीयैकतायाः प्रतीकम्—

संस्कृतस्य सर्वोत्कृष्टं वैशिष्ट्यमेतदस्ति यत् संस्कृतं समग्रम्भारतं यस्मिन्नैकभाषाभाषिणो नैकविचारप्रवणाश्च वसन्ति, तद् बहुभ्यो वर्षेभ्यः सांस्कृतिकैक्य-सूत्रसूत्रितङ्करोति। काले काले नैकविधानि परिवर्त्तनानि जातानि, अनेकाः क्रान्त्यः समभवन् सामाजिकजीवन-प्रवाहाः परिवर्त्तनङ्गताः जीवनम्प्रति जनसाधारणस्य दृशि परिवर्त्तनञ्जातम्परन्तथापि एवं सत्यपि कोऽपि विप्लवः नाशक्नोदैक्यसूत्रं विशृङ्खलयितुम्। सम्भवतः सूत्रस्यास्य शृङ्खलांशाः क्वचित्क्वचित्शैथिल्यङ्गताः, परमसौभाग्येन नाशक्नुवन् भ्रंशयितुम्। अस्यास्ति मुख्यङ्कारणं यदस्मज्जीवनदार्ढ्यमास्था आन्तरिकाधारणाः विश्वासाः संस्काराश्च यैस्तत्त्वैः सन्ति निर्मितास्तेषां रचना संस्कृतस्य माध्यमेनाजायत। हेतोरस्मान्न कोऽपि भारतीयः स्वीये भावात्मकजीवने संस्कृतप्रभावं विना नार्हति स्थातुम्। अतः कस्यापि स्वतन्त्रराष्ट्र-सर्वकारस्येदङ्कर्त्तव्यमस्ति यत्सः स्वकीयममूल्यं निक्षेपं रक्षेत्।

सौभाग्येन स्वातन्त्र्यप्राप्तेः पश्चादस्मत्केन्द्रीय-सर्वकारः संस्कृतस्य संरक्षणाय संवर्धनाय च प्रयतमानोऽस्ति। राजस्थान-सर्वकारस्य नीतिस्तु सर्वदैव संस्कृतविकासायोदारासीदस्ति च संस्कृतेऽनन्यास्थावद्भिरस्मन्मुख्यमन्त्रिश्रीमोहनलालसुखाड़ियामहोदयैः राजस्थान-संस्कृत-विभागस्य स्थापना, संस्कृत-परामर्श-

मण्डलस्य गठनम्, संस्कृतविद्यालयानामुन्नयनादीनि संस्कृतक्षेत्रेऽनेकानि महत्वपूर्णानि कार्याणि विहितानि, यानि तेषां सन्ति संस्कृतानुरागाभिव्यञ्जकानि। एतावत्यपि संस्कृतसम्बद्धाः बह्व्यः समस्याः सन्ति यासु शीघ्रमेव विचारणमस्ति परमावश्यकम्।

संस्कृतसंस्थानामद्यावधौ वेतन-शृङ्खलाः पूर्णतो नाभवन् युक्तियुक्ताः। एतासु सार्वदेशिकं संशोधनमस्त्यपेक्षितम्। अनेन संस्कृतज्ञानां प्रश्रयेण सहैव संस्कृतप्रगतावपि सम्पत्स्यते शृङ्खलैका। इत्थमेव छात्रवृत्तिक्रमेऽपि वृद्धिर्भवितव्या।

प्रान्ते कानिचन एतादृशि मण्डलानि सन्ति संस्कृतमहाविद्यालयाः विद्यालयाः वा सन्ति। राजस्थाने संस्कृतस्य सार्वदेशिकप्रचाराय प्रतिमण्डलमुख्यस्थाने संस्कृतशिक्षणालयस्य संस्कृतमहाविद्यालयस्य वा स्थापनास्ति परमावश्यकी।

एतदतिरिक्तं संस्कृतविद्यालयानां स्वरभवन-काष्ठ निर्मितोपवेशन लेखनादिसाधनादीनां युक्तियुक्तम् व्यवस्थापनम् प्रशासनिकपरीक्षासूच्चस्तरीयप्रशिक्षणेषु च संस्कृतपरीक्षोत्तीर्णानाम्प्रवेशनमित्याद्याः संस्कृतस्य गाम्भीर्योपेताः समस्याः सन्ति। यासामेकमात्रं समाधानं संस्कृत-विश्व-विद्यालयस्य स्थापनावर्त्तते। यद्यपि राज्यसर्वकारः विषयेऽमुष्मिन् प्रयत्नशीलः वर्त्तते, परमस्यास्ति शीघ्रमेवापेक्षा। श्रीमुख्यमन्त्रिणः ये हि सौभाग्येनास्मन्मध्ये विराजन्ते, साम्प्रतन्तेऽनुरुन्ध्यन्ते यत् विषयेऽमुष्मिन्स्तत्परतया निर्णयं गृह्णीयुरिति। येन नैकाः समस्याः स्वयमेव समादध्युः।

एतद्व्यतिरिक्तं स्वसंचालित-संस्कृत-विद्यालयानां वर्गीकरणस्य वेतनशृङ्खलायाश्च प्रश्नोऽसमाधत्तोऽस्ति। केचन शिक्षणालया एतादृशाः सन्ति, ये ददत्युच्चशिक्षाम्, परन्तेभ्योऽनुदानप्रतिशतन्न्यूनन्दीयते। शास्त्र्याचार्यस्तरीयविद्यालयेभ्यो नवतिप्रतिशतं साहाय्यन्देयम्, येन तेषां विकासः सम्भवेत्।

सर्वविदितमस्त्येतद् यत्संस्कृतशिक्षणालयाश्चिरकालतोऽविकसिताः बहुशः पृष्ठस्थाश्च वर्त्तन्ते। अत एतेभ्य आवश्यकसाधनप्रदानावसरे सामान्यनियमपरिधेरूर्ध्वं कृत्वा अङ्कनमस्त्यपेक्षितम्। यतः शताब्दिभ्यो पृष्ठस्थं स्वरूपं यावन्न भविष्यति सुव्यवस्थितन्तावदन्यविद्यालयतुलनायामेते कथं स्थातुं शक्नुयुः? भवत्येवं यदर्थविभागः शिक्षाविभागश्चैतद्दौर्बल्यमनवधायैवान्यशिक्षणालयानिवैतानपि विचारयति, येनैतेषां समुचितविकासे बाधोपतिष्ठते। अतोऽस्ति विनम्रतया विनिवेदनं यत् मान्याः श्रीमुख्यमन्त्रिमहोदयाः अस्याः वास्तविकताया अवधानार्थं किमपि सुस्थिरं समाधानङ्कुर्युः यदेतेभ्यः किञ्चित्कालाय औदार्यपूर्णदृशा विशेषनियमाः भवेयुर्निश्चिताः। अन्यथा तु यावदहं जानामि स्वतन्त्रसंस्कृतविभागस्थापनायाः मूलोद्देश्यमपि समाप्तिमेष्यति। संस्कृत-शिक्षां विशेषकोटौ निधाय तद्विकासो विधेयः।

यत्र कानिचित्साधनानि प्राप्तानि तत्र विद्यालयेषु छात्राः सन्ति वृद्धिङ्गताः, पूर्णयोगतः छात्रसंख्यायान्निता-

न्तमृद्धिः सञ्जातास्ति। माध्यमिकशिक्षामण्डलेन संस्कृतपरीक्षायोजनमुच्चतरविद्यालयस्यैकादशम्याङ्कक्षायां प्रवेशिकोत्तीर्णेभ्यः प्रवेशदानञ्च सन्दर्भेऽस्मिन्नुल्लेखनीयमग्रेसरणम्। माध्यमिकशिक्षामण्डलाध्यक्षाः श्रीलक्ष्मीलालजोशीमहोदया एतदर्थमभिनन्दनीयाः सन्ति। तेषाम्प्रेरणाया अनुरागस्य चैतत्फलमस्ति यदेषा समस्या समाधानमिता, अन्यथा तु विश्वविद्यालये त्रिभागस्थापनायाः सांग्लभाषया शास्त्रिणो बी. ए. परीक्षायां प्रवेशदानस्य प्रश्नाविव सप्तपञ्चाशद्विस्तावदतोऽद्यावधिविचाराधीनत्वमेवाभजिष्यत्।

चतुर्थपंचवर्षीययोजनायां संस्कृतप्रोन्नतये सर्वकारेण सुविपुलं द्रव्यं स्वीकर्त्तव्यम्। संस्कृतस्य प्रगतये द्रव्याढ्यानामपि ध्यानाकर्षणमस्त्यावश्यकम्। भारतस्य प्रधानमन्त्रिणः संस्कृतोत्थानायावदधन्ति महत्त्वञ्च ददति, तथा संस्कृतविकासाय क्रियमाणेषु कार्येषु संस्कृतमहाविद्यालयानाम्स्थापनायां विश्वविद्यालयादिभ्यश्च केन्द्रस्य न कापि विप्रतिपत्तिरुपस्थास्यतीति सर्वेभ्योऽपि राज्येभ्यः सन्दिष्टवन्तः। अस्यामनुकूलायां स्थितावस्माभिः सामूहिकरूपेण संस्कृतस्योन्नतये प्रयतनीयम्।

## सम्मेलनस्य योजनाः—

एषा प्रसन्नतायाः वार्त्तास्ति यत्संस्कृतस्य विकासाय सम्मेलनस्यापि काश्चन महत्त्वशालिन्यः योजनाः :—याः वेदानां संस्कृतस्य च प्रसारपरीक्षाणां संचालनम्, संस्कृत-भवनस्य निर्माणम्, संस्कृत-पुस्तकालयस्य स्थापनमित्यादिरूपाः सन्ति। एतेषामखिलकार्याणां स्पूर्त्यौ प्रत्येकस्य संस्कृतानुरागिणः सहयोगोऽस्त्यपेक्षितः। विश्वसिम्यहं यद्राजस्थानस्यौद्योगिके नगरे (भीलवाड़ानगरे) मान्यैः श्रीमुख्यमन्त्रिभिरुद्घाटितेऽस्मिन्नधिवेशने कृतनिर्णयानास्पूर्त्यै, विशेषतश्च जयपुरे संस्कृत-भवन-निर्माणायात्रत्यास्तथान्ये संस्कृतानुरागिणो दानवीराः स्वीयन्दायित्वम्विशेषतोऽनुभविष्यन्ति।

अस्मिन्महत्कर्मणि राजस्थानसर्वकारोऽपि साहाय्यङ्करिष्यतीति सम्भावयन् भवतः समान् स्वागतसमितिसदस्यान्नागरिकांस्तथा पुनः सभापतिपदे नियोजकान् सम्मेलनस्य सदस्यान् प्रति कृतज्ञताञ्ज्ञापयामि।

"संगच्छध्वम् संवदध्वम् सं वो मनांसि जानताम्"

ओं तत्सत्





# श्रीशिवानन्दगोस्वामिनां संस्कृताय योगदानम्



लेखक:—श्री के० माधवकृष्ण: शर्मा
(सञ्चालक:-संस्कृतशिक्षा, राजस्थान)

अनुवादक:—श्रीभूवालाल उपाध्याय:

भारतस्य विभिन्नभागेषु संस्कृतसाहित्यस्य विकासेतिहासे राजस्थानस्य योगदानं महत्वं बिभर्ति। राजस्थानस्य शासकेषु संस्कृतसंरक्षकाणां मध्ये मेदपाटस्य महाराणाकुम्भा बीकानेरस्य महाराजो-अनूपसिंह:, जयपुरस्य महाराजो जयसिंहश्च विशिष्योल्लिखितुं शक्यन्ते। एभि: संस्कृत-साहित्यं संरक्षणेन सुरक्षया च समभ्यवर्ध्यत, यस्य प्रत्यक्षं प्रमाणं विभिन्नस्थानेषु संगृहीता: पाण्डुलिपय: स्मारकानि च सन्ति।

संस्कृत-साहित्यजगति राजस्थानप्रदेशेन कृतस्य कार्यस्य विस्तृतेतिहासोऽधुनायावदपि न केनापि व्यरचि, यद्यपि यस्य संकलेन पत्रराशिरेव समुत्पद्येत। यदा लेखको बीकानेरस्थानूप-संस्कृत-पुस्तकालये संग्रहलयाध्यक्ष: प्राचीनप्रकाशनस्य संचालकश्चासीत्, तदा प्राच्यविद्याविशारदानां मनसि, एकस्मिन्महति संस्थाने प्राचीनरचनासंग्रहाय प्रबोधित: प्रयत्नो बीकानेरशासकानां संरक्षणेफलेग्रहि: समजायत। अत्रेदं स्मरणीयं, यदेभि: शासकै: सुदूरदक्षिणप्रान्तात् विद्वांस आमन्त्रिता:, अचलसम्पत्तिं च प्रदायार्थचिन्तयापि निश्चिन्तीकृता:। वस्तुत: साहित्यिकविकासाय विदुषामर्थचिन्ता अपाकरणीया, तद्वते साहित्याभिवृद्धिर्गगनकुसुमितैव। पुरा साहित्यकृद्भिरेव भारतीयसंस्कृतेरैक्यं सुरक्षितमभूयत, उन्नतेश्चरमं सीमानमध्यगभ्यत।

राजस्थानशासकै: संरक्षितेषु साहित्यकारेषु अस्माकं पुरत: सुगृहीतनामधेयस्यैकस्य महतो विदुषो नाम परिस्फुरति। यो न केवलं महान् तांत्रिक: प्रत्युत वैयाकरण:, ज्योतिर्विद्, आयुर्वेदस्य पारगामी विद्वांश्चासीत्। 'गोस्वामी' इत्युपाधिनालङ्कृतोऽसावद्यापि स्ववंशजेषु तस्यासाधारणं गौरवं व्यातनोति।

सम्प्रति राजस्थानस्य प्रधानेषु संस्कृतकेन्द्रेषु 'महापुरा' इत्याह्वे ग्रामे श्रीशिवानन्दगोस्वामिना संस्कृतजगति कृतानि महान्ति कार्याणि वर्ण्यन्ते।

जयपुरात् पश्चिमायां दिशि सार्धद्वयगव्यूतिदूरस्थायि महापुरानामकं ग्राममस्ति। तस्मिन्नेव ग्रामे

सप्तदशभ्यां शताब्द्यां श्रीशिवानन्द-गोस्वामिनोऽवात्सुः। येषां पूर्वपुरुषाः सुदूरदक्षिणप्रान्तस्थात् 'काञ्जीवरमितिनगरादत्रागच्छन्। अमीषामुत्तराधिकारिषु प्रायशस्तान्त्रिकाः समभवन्, तथापि संस्कृतसाहित्ये विभिन्नशाखा अवलम्ब्य तेषां कृतयोऽतीवमहत्त्वं भजन्ते।

ग्रामस्य 'महापुरा' इति नामापि गोस्वामिनां निवासगौरवादेव प्रथितमासीदित्यनुमीयते संस्कृतसाहित्ये तेषां सर्वतन्त्रस्वातन्त्र्यमासीत्। यदाहं बीकानेरस्थे अनूपसंस्कृतपुस्तकालये संग्रहाध्यक्षआसम्, तदा गोस्वामिरचितानां वहूनां ग्रन्थानां पाण्डुलिपयोऽवालोकिषि।

षोडश्यां शताब्द्यां श्रीनिकेतनदीक्षितस्यात्मजाः श्रीश्रीनिवासदीक्षिताः 'शिवकाञ्चीतः' दक्षिणंदिग्विभागे पेष्णारनद्यास्तटे स्थितात् 'पाणपट्ट' इत्याह्वग्रामादुत्तरे भारते समायाताः। दीक्षिता यज्ञविद्यायां महान्तो विद्वांसो धार्मिकाश्च आसन्। श्रीनिवासदीक्षिताः जलन्धरनगरे'सुन्दराचार्यः' इत्याख्येनैकेन महत्तान्त्रिकेण [महात्मना सममिलन्, तस्माच्च 'श्रीविद्यां' समधिगम्य वाराणस्यामवसन्। श्रीनिवासदीक्षितः १६४० तमे वत्सरे शिवार्चनचन्द्रिकां व्यरचयत्, यस्याश्चतस्त्रः पाण्डुलिपयो बीकानेरस्थे 'अनूपसंस्कृतपुस्तकालये' समुपलभ्यन्ते, तस्या इमे—आदिमाः श्लोकाः—

देशोऽस्ति दक्षिणदिशि द्रविडाभिधानः
काञ्चीति यत्र वसतिः स्मरशासनस्य।
पुण्यापुरी पुरनिषूदनभागधेय-
सौभाग्यदन्तुरितकीर्तिरचञ्चलश्रीः।

आविर्बभूव हयमेधमुखे विरञ्चे
र्यत्र स्वयं स भगवान् रमया समेतः।
अद्यापि हस्तगिरिनाथ इति प्रसिद्धः,
संदृश्यते सकललोकसमर्चिताङ्घ्रिः॥

तस्याः दक्षिणदिग्गतः क्षितिसुरैः षट्शास्त्रविद्भि-
श्चतुर्वेदैः सोपनिषद्भिरङ्गसहितैराढ्यैः सदाधिष्ठितः।
पाणंपट्टिति विश्रुतः क्षितितले पेष्णानदी तीरभूः,
देशे यागगृहाकुलः सकलदिक्ष्वास्तेऽग्रहारो महान्॥

आत्रेयगोत्रशतपत्रविकासमित्र-
स्तत्रातिरात्रसमहाव्रतसत्रकर्ता।
भर्तार्तदीनकृपणान्धसुहृज्जनानां
षट्शास्त्रवित् समरपुंगवदीक्षितोऽभूत्॥

तस्यात्मजः फणिपतिर्वरपाणिनीये
मीमांसकेष्वपि गुरुः श्रुतिषु स्वयंभूः।
सद्द्वादशाहचयनान्वितवाजपेय
सोमाध्वरी भुवि तिरुम्मलदीक्षितोऽभूत्॥

तन्नन्दनः सकलदेवविदां वरिष्ठः
श्रौतक्रियासु निपुणः श्रितसोमदीक्षः।
आसीदशेषगुणरत्ननिधिः पृथिव्यां
श्रीश्रीनिकेतन इति प्रथितोऽध्वरीन्द्रः॥

तत्सूनुः श्रीनिवासः सकलनिगमवित्सर्वशास्त्रार्थवेत्ता,
श्रौतस्मार्तेषु कर्मस्वतिशयनिपुणः सत्कविः स्वीयदेशात्।
पीठं जालन्धराख्यं प्रकटितविभवं प्राप्य यात्राप्रसंगात्
तत्र श्रीसुन्दराख्यं सकलगुणनिधिं प्राप्य सद्देशकेन्द्रम्।

तत्पादपङ्कजयुगं परिचर्य तस्मात्,
प्राप्याभिषेकमखिलागममप्यधीत्य

तस्याज्ञया समधिगम्य परों स काशीं
तत्राकरोद्वसतिमात्मविदां वरिष्ठः ॥
तत्र स्थितः सकलतन्त्ररहस्यवेत्ता,
शिष्टैः शिवार्चनपरैः श्रितशैवदीक्षैः ।
अभ्यर्थितो वितनुते सकलागमार्थ
सारोदयां भुवि शिवार्चनचन्द्रिकां सः ॥

श्रीनिवासस्यात्मजो जगन्निवास आसीत । स बुन्देलखण्डं गत्वा तत्रैव वासमकरोत् । बुन्देलखण्डस्य राजा वराक्षी तस्य शिष्येष्वासीत् । जगन्निवासस्य त्रयः पुत्रा आसन्—शिरोमणिभट्टः, जनार्दनः, चक्रपाणिश्च । शिवानन्दः बुन्देलखण्डस्य देवीसिंहस्य समकालिक आसीत् । अस्यैव शासकस्य संरक्षणे श्रीशिवानंदः 'सिंहसिद्धान्तसिन्धुसाम' तान्त्रिकं ग्रन्थं विरचायामास । श्रीशिवानंदस्यात्मजः श्रीनिकेतनः जयपुर एव उवास, शिवानंदः, तस्य भ्राता जनार्दनः, लक्ष्मीनिवासश्च (जनार्दनस्य पुत्रः) महाराजस्यानूपसिंहस्य राज्यकाले बीकानेरमगच्छन् । महाराजस्तेभ्यो ग्रामद्वयं प्रदाय तान् सममानयत् । इदं सम्यक्तयावगन्तुं न शक्यते यद् दीक्षितेषु कतमः 'गोस्वामी' इत्युपाधि कदा समध्यगच्छत् । अस्य दीक्षित-परिवारस्य वंशावलिः 'मथुरास्थभट्टानां संक्षिप्तेतिहासः' इत्यमिधे पाण्डुलिपिरूप इतिहास-ग्रन्थे विद्यते । पाण्डुलिपिरियं शिवानंदस्य वंशोत्पन्ने मेधराजगोस्वामिनः सकाशे मया दृष्टा, तस्या हिन्दीभाषायामनुवादोऽपि तस्य पित्रा समपाद्यत । संस्कृतस्य मूला पाण्डुलिपिः श्रीराधारमणपर्यन्तं वर्णयति । अहमत्र श्रीनिकेतनादारभ्य राधारमणपर्यन्तं वर्णनपराणि पद्यान्युद्धरामिः—

श्रीश्रीनिकेतन इति स्मरतुल्यरूपः
सुश्लाघ्यकाव्यपरितोषितनैकभूपः ।
दाताविभात्यविधरित्रि जगन्निवासो
ज्यायस्सुतस्यसुतउग्रमहोग्रतेजाः ॥
तस्यानुजो दिवसकृज्जयदीर्घतेजाः
क्ष्मापालमौलिमिलदङ्घ्रिसरोजयुग्मः ।
दानावधीरितबुधावनिजो मनीषी
विद्यानिवास इति भाति भुवि प्रतीतः ॥
श्रीमज्जनार्दनजनुर्जगदीशमुख्यै-
रानन्दितस्तुतिभरेण करेण कर्णः ।
सर्वागमानुविधिरत्नचयाकरोऽत्र
लक्ष्मीनिवास इति भाति विभाकरश्रीः ॥
बुधजनविस्मयकारी स्मरस्फुरद्रूपनिवहेन ।
विलसति सुकृतप्रवणः श्रीरमणः श्रीनिकेतनजः ॥
देशश्चेदिर्वेत्रवत्या पवित्रो
जागेश्वर्याजाग्रउग्रप्रभावः ।
बुन्देलाख्यैर्भूपवर्यैरुपेतस्त-
न्मध्यस्यात्माभगोणी विभाति ॥
स्थितिस्तत्र नानासुरार्चालसत्स-
त्सरो वापिकाकूपकुण्डान्वितायाम् ।
महाक्रीडवृन्दैर्भृशं मण्डितायां
महासौधहर्म्यादिसंशोभितायाम् ॥
पञ्चग्रामा दुर्गसिंहेन दत्ता-
श्चत्वारोऽन्यं विष्णुसिंहेन राज्ञा ।
द्वौ सुश्रीकौ कर्णपुत्रेण भवते
रेवं प्रायः प्राप्तितोऽत्रस्थितिर्नः ॥

श्रीशिवानन्दगोस्वामी स्वसमकालिकस्यामेरमहाराजस्य श्रीविशनसिंहस्य संरक्षणमध्यगच्छत्; १७४७ विक्रमाब्दे महाराजो गोस्वामिने ग्रामचतुष्ट-

यर्मपि व्यश्रारायत् । 'महापुरा'इत्यभिधोऽपि तेष्वेवान्तर्भवतीति गोस्वामिनां समीपे विद्यमानेभ्यस्तामपत्रभ्योऽवगम्यते ।

श्रीशिवानन्दस्य बह्व्यो रचना बीकानेरस्थानूपसंस्कृतपुस्तकालय एवोपलभ्यन्ते नान्यत्र। महाराजेन-अनूपसिंहेन सह सम्पर्क एव तत्र हेतुत्वमावहति। एषु ग्रन्थेषु कुत्रचित् शिवानन्दः, कुत्रचिच्च शिरोमणि-भट्ट इति नामभेदो विलोक्यते । अत्र ललितार्चनदीपिकायां नामद्वयमपि गोस्वामिन एवेत्यात्मनैवोदलिखल्लेखकः । अनूपसंस्कृतपुस्तकालये प्राप्तग्रन्था एते :—

१. महाभारत-सुभाषित-संग्रहः, पाण्डुलिपिः ( सं० १००० ) वि० संवत् १७३६ (ए० डी० १६७६); रचयिता शिवानंदः ।
२. आह्निकरत्नम् (सं० १८७७); रचयिता दाक्षिणात्यः शिरोमणि-भट्टः ।
३. संक्षेप-प्रायश्चित्तम् (सं० २०६१-६२); रचयिता शिवानंदः ।
४. तिथिनिर्णयः (सं० २१६६); रचयिता शिरोमणि भट्ट. । अस्योल्लेखं श्रीकाणेमहाशयोऽपि व्यदधात् स्वकीये धर्मशास्त्रस्येतिहासे ।
५. व्यवहारनिर्णयः ( सं० २२३४ ); रचयिता शिवानंदः ।
६. आचारसिन्धुः (सं० २२४६) अयमेको निबंधः, यस्तरंगेषु निबद्धः; यस्मिन् नवसहस्रं श्लोकाः सन्ति ।
७. वैद्यरत्नम् (सटीकम्), (सं० ४१५५) इदं सप्तप्रकाशेषु निबद्धम् । अस्य पाण्डुलिपिः (सं० १७३४—१६७७ ए० डी० ); जीर्ण-शीर्णा । रचयिता शिवानंदः ।
८. खेचरतुरंगादिप्रकाशिका ( सं० ४३८१ ) ग्रहमण्डलवर्णनपरं श्लोकनवकम् ।
९. बालविवेकः ( सं० ४७४६—४७५० ) ज्योतिषग्रन्थः; यत्र मुहूर्ता एव चर्चिता केवलम् । पाण्डुलिपिः ( सं० ४७४६ ); रचयिता शिवानंदः । द्वितीया ( सं० ४७५० ); रचयिता शिरोमणि भट्टः ।
१०. मुहूर्तरत्नम्, पाण्डुलिपिः ( सं० ४८३४ ); रचयिता शिरोमणि भट्टः । पाण्डुलिपिः, 'वसुनेमाद्रिचन्द्रे' (सं० १७२८—१७६१ ए० डी०) ।

अन्तिमे भागे :—

देशोऽस्ति दक्षिणदिशि द्रविडाभिधानो
यत्र द्विजातिनिवहा निवसन्ति पुण्याः ।
ये पण्डिताः श्रुतिसमीरितकर्मदक्षा
अध्यापनेन यजनेन नयन्ति कालम् ॥
तत्राभवन्निखिलशास्त्रसदर्थवेत्ता,
भेत्ता स्वशिष्यहृदयस्थतमश्चयस्य ।
छेत्ता निजाश्रितजनाशिवदुस्तरूणां
श्रीश्रीनिकेतन इति प्रथितो द्विजेन्द्रः ॥
तस्यात्मजन्मा भवदार्यवर्य-
श्रीश्रीनिवासो निखिलागमज्ञः ।
तपोनिधिं यं गुणरत्नसिन्धुं
शिवेनतुल्यं निगदन्ति सन्तः ॥
तत्सूनुरासीज्जगतीतलेऽस्मि-
न्नाचार्य गोस्वामिजगन्निवासः ।
शिरोमणिस्तत्प्रभवो निबंधं
मुहूर्तरत्नाख्यमिमं व्यतानीत ॥

११. सिंह-सिद्धान्त-दीपिका (सं० ५८८५), व्याकरण-पुस्तकम्; र० शिवानंदः ।

१२. विभक्त्यर्थविवरणम् ( सं० ५९३१ ); रचयिता शिवानंद. ।

१३. तद्धितकोशः ( सं० ५९३६ ); अन्ते "इति श्रीगोस्वामिश्रीनिवासपौत्रश्रीगोस्वामिजगन्निवासात्मजश्रीशिरोमणिभट्टनिर्मिततद्धितकोशः सम्पूर्णः" इति लिखितमस्ति ।

१४ समासकोशः (सं० ५९४०); पाण्डुलिपिः ( सं० १७३१ )।

१५. स्त्रीप्रत्ययकोशः ( सं० ५९६८ ); रचयिता शिवानंदः ।

१६. ईश्वरस्तुतिः (सं० ६१०३); र० शिरोमणिभटः ।

१७. जालपास्तुतिः (सं० ६२४४); र० शिरोमणिभटः

१८. दुर्गास्तुतिः ( ६२६७ ); र० शिरोमणिभट्टः ; पाण्डुलिपिः (सं० १७२१) ।

१९. गंगा-स्तोत्रम् ( सं० ६२२९); र० शिरोमणिभट्टः

२० प्रातः-स्मरणम् (सं० ६३४४) ।

२१. सपर्याक्रमदर्पणस्तोत्रम् (सं० ६६२७); रचयिता शिवानंदः, (सं० १७२१) ।

२२. त्रिपुरा-स्तुतिः (सँ० ६७४२); र० शिरोमणिभट्ट।

२३. लक्ष्मीनारायणार्चाकौमुदी ( सं० ७१२८ ), र० शिवानन्दः; अनूपसिंहस्य संरक्षणे लिखिता। अस्योल्लेखः प्रो० काणे महाशयेनापि व्यधीयत धर्मशास्त्रस्येतिहासे (१७५०) ।

अनूपसंस्कृतपुस्तकालये समुपलब्धस्यार्याख्यानकल्पद्रुमस्य पाण्डुलिप्यां २४४ पृष्ठे लिखितं प्राप्यते यन्महाराजो "अनूपसिंहः" यदा बीकानेरभुवं शास्ति स्म, तदा श्रीशिवानन्दो बीकानेरमागच्छत्, सम्मानपुरस्सरं ग्रामद्वयञ्चालभत ।

२४. महाविद्याप्रमोदलहरी (सं० ७२८३), रचयिता शिवानन्दः, पाण्डुलिपितिथिः (सं० १७३२) ।

२५. ललितार्चनदीपिका (सं० ७३२५) । अन्ते चोल्लिखितम् :—

"इति श्रीगोस्वामिशिवानन्दापरनामकशिरोमणिभट्टविरचिता श्रीललितार्चनदीपिका सम्पूर्णा ।

२६. ललितार्चनकौमुदी ( सं० ७३०८ ); र० शिरोमणिः . पञ्चदशप्रकाशेषु विभक्ता ।

२७ कार्तवीर्यविधिरत्नम् ( सं० ७७२३ ); रचयिता शिवानन्दः ।

२८. सिंहसिद्धान्तसिन्धुः ( सं० ८२८१–८२ ); अयं मन्त्रशास्त्रग्रन्थः ६२ तरंगेषु विभक्तः । इदमेतेषां महत्कार्यं वरीवर्ति । अस्य रचना बुन्देलखण्डाधिपतेर्देवीसिंहस्य संरक्षणे समभवत् । महाराजः स्वयमपि वैद्यकतांत्रिकग्रन्थस्य सिंहसुधानिधे रचयिता विद्यते; अस्य पाण्डुलिपिश्चानूपसंस्कृतपुस्तकालयेऽधिगम्यते । श्रीशिवानन्दस्य 'सिंहसिद्धान्तसिन्धुः' संस्कृतसाहित्ये महत्कार्यत्वेन गणयितुं शक्यते ।

अस्यान्ते प्रतिलिपिकः ३५३१० श्लोकानां संख्यामुदलिखत् । अस्य प्रारम्भ एभिः श्लोकैर्भवति :—

यस्याङ्घ्रिद्वयपूजनेन निखिला सिद्धीर्लभन्ते नराः,
वृद्धोः प्राप्य वसन्ति वेश्मसु परास्तेषां समाः सम्पदः।

भक्तस्वान्तनितान्तमोहदलने दक्षं विपक्षं वरम्,
विघ्नानां प्रणमाम्यनारतमहं तं श्रीगणाधीश्वरम्॥१

सर्वं संतमसावृतं जगदिदं भाणिः समुद्भासयद्,
अम्भोजानि विकासयन् विहरिणः कोकान् समाश्वासयन्।
शीतांशुं परिहासयन् गतरुचिं संभासयन् वैरिणो,
भक्तक्लेशमुदासयन् स भवतु क्षेमाय भासांपतिः ॥२॥

अंसासक्तोत्तमस्रग् वनभुवि सततं यो रिरंसानुरक्तो
गुञ्जोत्तंसाभिरामः प्रतिभयसमरे यो नृशंसारिहन्ता।
भक्ताशंसाभिपूर्तौ सकरुणहृदयो, यो बलं सावलेपं
विध्वंसाभकीर्तिर्वितरतु विविधं शर्म कंसाहितस्ते ॥३

भाले प्रालेयरश्मिं दधदतिरुचिरं शोभने कण्ठदेशे,
तारं हारं फणीन्द्रैः फणमणिसुभगैर्निर्मितं दीप्तिमन्तम्।
वामां वामाङ्कदेशे नलिननिभमुखीमुन्मुखीमिष्टयाने,
भक्तानां विश्ववन्द्यो भसितसिततनुः शं विधत्तां महेशः ॥४॥

उदारचरिताऽद्भुता सुरमणैः समस्तैः स्तुता,
युतानिखिलसद्गुणैर्द्रुतघुताघसंहा नृणाम्।
कृपाकलितसेवनोद्यततमात्मभक्तायुता,
शुभं तव निरन्तरं कलयतु क्ष्माभृत्सुता ॥५॥

कर्पूरस्फुटकैरवेश्वरगिरिप्रालेयगोत्राधरां-
स्वः सिन्धूदकपूर्णशारदविधुस्वच्छप्रभाभासुराम्।
सद्वृत्तामलमौक्तिकावलिकृतैः भूषागणैर्भूषितां,
वाग्गुम्फाद्भुतशक्तिदाननिपुणां वागीश्वरीमाश्रये ॥६

दृप्यद् वैरिसमुच्चयक्षयकरः कीर्तिद्युतिर्द्योतिता,
शेषाकाशदिगन्तरः पटुतरः प्रज्ञौघवित्तार्पणे।
राजद्राजसभासिभाजितगुणग्रामोऽभिरामो भृशं
भक्तः श्रीनृहरेर्विभाति भुवने बुन्देलभूपान्वयः ॥६॥

युद्धे युद्धविदोऽर्जुनं लयविधौ धीरं गिरामीश्वरम्,
सौन्दर्ये सुदृशः स्मरं महसि यं तेजस्विनो भास्करम्।
धर्मे धर्मविदोऽपि धर्मतनयं दानेऽर्थिसार्थावलिम्,
मन्यन्ते स्म महीतले समभवच्छ्रीरामसाहिर्नृपः ॥७॥

आसीत्तदीयतनवो विनयोपपन्नः
स्वच्छाशयो बहुदयो विबुधव्रजेषु।
युद्धे निकाममभयो विजयार्जितश्रीः
संग्रामसाहिरिति भूमिपतिः प्रसिद्धः ॥

तस्यात्मजो बलरजोभररुद्धभानु
दृप्तद्विषद्दलनतीव्रमहः कृशानुः।
अत्यद्भुतो गुणगणैः प्रथितो धरण्यां
श्रीभारतो बहुलदानरतो बभूव ॥

तत्सूनुः परिपन्थिमन्थिविलसद्वीरोऽतिधीरो रणे
वेल्लत्तुङ्गतुरङ्गनिष्ठुरखुरक्षुण्णक्षमामण्डलः।
दानाम्भः शमितार्थिदैन्यदहनख्याताभिधानः क्षितौ,
देवीसिंहनरेश्वरोनिरुपमो राजोत्तमो राजते ॥

आसीत्तस्य गुरुर्गुरुगणगणैर्मन्त्राब्धिपारङ्गमः।
श्रीगोस्वामिजगन्निवास इति सन्नाम्ना जगद्विश्रुतः।
यस्याज्ञावशवर्तिनः क्षितिभुजस्तेतेऽभवन्भूरिशो,
येषां कीर्तिरतीवभाति भुवने दाने कृपाणेऽपिच ॥

तत्तातस्तु तथाभवद्ध्रुवसमः श्रीश्रीनिवासः कृती,
ज्ञानोदारकुठारदारितजगज्जाड्योरुभूमीरुहः।
नानातन्त्रविबोधमाप्य मनुजः यस्यानुकम्पानिधेः,
शिष्याः दैवतसेवनैरभिमतामह्नाय सिद्धिंगताः ॥

यस्याङ्घ्रिपद्मकृपया प्रथितः-पृथिव्या-
मेतादृगत्र जयतिं स्म जगन्निवासः।

य: सर्वसिद्धिसहितो जगति द्विजानां
तोषं व्यधादविरतं विविधोपकारैः ॥
ज्येष्ठस्तस्य सुतो जनोदितशिवानन्दाभिधानः क्षितौ-
श्रीविद्याचरणारविन्दयुगलध्यानैकतानोऽनिशम् ।
देवीसिंहनृपेण धर्मकलितस्वान्तेन सम्प्रार्थित-
स्तत्प्रीत्यै वितनोति धार्मिकजनश्रव्यं निबन्धोत्तमम् ॥

श्रीशिवानन्दगोस्वामी स्वरचितग्रन्थेषु बहूनि पुस्तकान्युदधीरत्, येषां सूची विस्तरभिया परित्यक्तास्ति। एतेनैतेषां गहनं ज्ञानं विस्तृतांध्ययनं च प्रस्फुटीभवति।

अन्तेचोल्लिखितम् :—

प्रोक्तं गणेशप्रमुखामराणा-
मुपासनाथा निखिलं विधानम् ।
त्रैलोक्यतच्चेतसि साधकानां
भूयादमन्दः सततं प्रमोदः ॥
चन्द्रवह्नितुरगैकसम्मिते
वत्सरेसहसिशुक्लपक्षके ।
शीतरश्मिसुतवासरे शुभे
ग्रन्थ एष परिपूर्णतामगात् ॥

उपर्यङ्कितास्तिथय एवं विलिख्यन्ते :—

| संख्या | संवत् | ख्रिस्ताब्दः |
|---|---|---|
| १ | १७३६ | १६७९ |
| ६ | १७४१ | १६८४ |
| ७ | १७३४ | १६७७ |
| १० | १७२८ | १६७१ |
| ११ | १७३१ | १७३४ |
| १८ | १७२१ | १६६४ |
| २ | ,, | ,, |
| २४ | १७३२ | १६७५ |
| २८ | १७३१ | १६७४ |

अत्रेदं प्रतीयते यत् श्रीशिवानन्दः 'सिंहसिद्धान्त-सिन्धुं' १६७४ ख्रिस्ताब्दे व्यरचयत्, 'दुर्गास्तुतिं' 'सपर्याक्रमदर्पणं' च १६६४ ख्रिस्ताब्दे। अतस्तेषां साहित्यिकप्रवृत्तीनां कालः सप्तदशशताब्द्या उत्तरार्धमिति निश्चीयते।

शिवानन्दस्य भ्राता जनार्दनोऽपि 'महालक्ष्मीस्तुतिं' (सं० ६४४२) 'मन्त्रचन्द्रिकां' (सं० ७६९२) च निर्ममे। ययोः पाण्डुलिपी-अनूपसंस्कृतपुस्तकालये विद्येते। मन्त्रचन्द्रिकायाः समयः सम्वत् १७३१ (१६७४ ए० डी०) वर्तते।

अहमत्र शिवानन्दरचितान् तानेव ग्रन्थानुदलेखिषम्, ये 'अनूपसंस्कृतपुस्तकालये' समुपलभ्यन्ते। अन्यापि तद्विरचितानां ग्रन्थानां सूचो तद्वंशीयानां सकाशे विद्यते, साप्यत्र विलिख्यते :—

सिंहसिद्धान्तप्रदीपकः
सुबोधरूपावलिः
विद्यार्चनदीपिका
सुभगोदयदर्पणम्
आचारसिन्धुः
प्रायश्चित्तार्णवसंकेतः
सुभाषितश्लोकसंग्रहः
कालविवेकः
बालबोधिनीटीका
शब्दभेदप्रकाशः
आख्यानवादः
पदार्थतत्वनिरूपणम्
नयविवेकः
कुलप्रदीपः



श्रीचन्द्रपूजाप्रयोग:

नित्यार्चनकथनम् ।

परमार्थतो राजस्थानं विशिष्य महापुरा ( जयपुरमण्डले ) ग्रामं शिवानन्दसदृशस्य महाविदुषः शुभागमनेन कृतार्थतां भजते ।

राजस्थानीयं संस्कृतजगदपि परिवारस्यास्याधमर्णतामभ्युपगच्छति ।

---

(राजस्थान-संस्कृत-साहित्य-सम्मेलनस्य भीलवाड़ा-नगरे सम्पन्नस्य द्वादशाधिवेशनस्यावसरे प्रकाशितायां 'स्मारिकायां' हिन्दीभाषायां मुद्रितस्य लेखस्यानुवाद एषः । अनुवादेऽस्मिन् विस्तरातङ्कात् केचन भागा उपसंहृता अन्ये चामहार्था इति विज्ञायान्तरिताः । यथा च श्रीशर्ममहोदयैर्निर्दिष्टम्, देशसंस्कृतिप्रतीकभूतैर्वाग्विदग्धैर्गोस्वामिभिः शिवानन्दमहोदयै राजस्थानमधमर्णतां प्रापितमिति सुस्पष्टमभिशक्यतेऽवगन्तुमनेन । अस्य च साहित्यमहोदधेर्यावत्समुपलभ्यमानानां ग्रन्थोर्मिमालानां पाण्डुलिपीनां च प्रकाशनेन, प्रकाशितस्य च साहित्यस्य सुतरामालोचनावगाहनेन प्रभूतानामुद्रश्मिणां महार्हाणां च रत्नानामुपलब्धिः स्यान्नामेत्यभिव्यञ्जयन्तो वयं सुरभारतीसमुद्धारबद्धादराणां विदुषामधिकारिणां च मनोनियोगमस्मिन्विषये प्रार्थयामः ।) अन्तेच वयं श्रीमन्माधवकृष्णशर्माणंतत्प्रयत्नात् प्रशंसन्त वयं एतदेव ब्रूमः—

'जयत्यसौमाधवकृष्णशर्मा' इति ।

[ सम्पादकः ]



# राजस्थानराज्यस्य शिक्षामन्त्रिणः श्रीहरिभाऊ-उपाध्यायस्य राजस्थान-संस्कृत-साहित्यसम्मेलनस्य द्वादशाधिवेशनस्य स्मारिकायाः प्रस्तावनारूपं वक्तव्यम्

अनुवादकः—श्रीरघुवीरस्वरूप भट्टः

राजस्थान-संस्कृत-साहित्य-सम्मेलनस्य द्वादशतममहाधिवेशनावसरे संस्कृतविदुषां विमर्शात्मकैर्गवेषणापूर्णैश्च निबन्धैस्तथा राजस्थान-प्रान्तीयाया दशवार्षिक्याः प्रगतेः सिंहावलोकनेन समन्वितामिमां स्मारिकां प्रस्तुवता मया हार्दिको ह्लादोऽनुभूयते ।

इयं संस्कृतभाषाऽस्माकमुत्तराधिकारे संप्राप्तो दिव्यो निधिर्वर्तते । अस्याः स्वीया शिक्षाव्यवस्था, स्वीयः शिक्षणप्रकारः, सुविस्तृतं साहित्यम्, स्वतंत्राश्चास्याः पाठशालाः सन्ति । स्वतंत्रस्तदीयः परीक्षाणां क्रमः किंबहुना राजस्थाने तस्याः शिक्षणव्यवस्थां सम्पादयितुंशासननिकायोऽपि पृथगेव वर्तते । संस्कृतभाषायाः स्थानं विश्वभाषासु श्रेष्ठमस्ति । अस्याः प्राणवत्ताप्रतिपादकमिदमेव सुमहत्प्रमाणमस्ति यच्चिरकालाद् राज्याश्रयाभावेऽपि तथैवेयं वरीवर्तते ।

संस्कृतभाषायाः स्वीयाः गुणा मौलिकं चोद्भावनसामर्थ्यमेवाऽत्र कारणम् । संस्कृतसाहित्येऽस्माकं संस्कृतेः कोषः परिरक्षितो भारतीयानां मस्तिष्कं संस्कृतसाहित्यस्य मधुराभिः कल्पनाभिः परिव्याप्तं चास्ति । अस्यामेव भाषायामस्माकं दर्शनानि, अध्यात्म्यचिन्तनम्, धर्मः, सभ्यता संस्कृतिश्चेति सर्वमेव सुनिहितं वर्तते । अत एवास्या भाषायाः परिज्ञानं भारतीयानां कृतेऽत्यावश्यकमस्ति । सर्वा आर्यभाषाः संस्कृतानुप्राणिताः सन्ति । महात्मना गान्धिमहाभागेनापीदमेव प्रत्यपादि यत् भारतीयभाषाभ्यः संस्कृतांशे निःसारिते ता निर्माल्यतामधिगमिष्यन्ति । काश्मीरादाकन्याकुमारीभारतदेशस्य प्रतिग्रामं जनाः संस्कृतभाषायाः स्वल्पं ज्ञानन्तु रक्षन्त्येव । अनेनैतत्सिद्धयति यत् संस्कृतभाषाऽस्माकं संस्कृते राष्ट्रीयैकतायाश्च समायोजिकाऽस्ति ।

स्वतंत्रभारतस्य नेतृभिर्यदैतदवगतं विविक्तं च तदा तेषां मनसि विगतस्य स्वर्णयुगस्य पुनः प्रतिष्ठापनाकांक्षा प्रादुरभवत् । विश्वेऽस्मिन् स्वदेशस्य महत्तायाः कारणमपि तेषां स्मृतिपथ्यवातरत् यदयं भारतदेशो जनबलेन सैन्यबलेन वा न हि जगतो मूर्धानमध्यारुरोह प्रत्युत तन्महत्वस्याधारशिला भारतीयासंस्कृतिस्तदुन्नतं चाध्यात्म्यमेवासीत् । अतोऽनयोरुभयोराधारभूतायाः संस्कृतभाषायाः पुनरुद्धाराय संवर्धनाय च प्रयत्नवत्वं न केवलं भौतिकमपि तु राष्ट्रीयमपि कर्मामन्यत तैः । अस्यै प्रश्रयं प्रदातुं प्रकाराश्च साधिताः ।

अद्यतने युगे यत्र विज्ञानस्य भौतिक्यावश्यकतानां च प्रतिद्वन्द्विता वर्तते सर्वत्र, तत्र संस्कृतभाषायाः संवर्धनं कथं भवेदिति सुमहान् प्रश्नः समुत्पन्नः । परं संस्कृतसेवनेन जीवने आत्मिकगुणानां विकासः संतुलितजीवनस्य निर्माणं च भवति, किं बहुना मानवतायाः प्रतिष्ठापनमपि जायते । अतो वैज्ञानिकौद्योगिकव्यावसायिकादिसमुन्नतेः साधनानामुपेक्षामन-

चरतो राज्यस्यशिरसि तदविरोधितया संस्कृतशिक्षा-परिचालनस्यापि सुमहान् दायित्वभारः समापतत्येव। संस्कृतविश्वपरिषदुत्तरप्रान्तीयसंस्कृतविद्याकेन्द्रेण चास्मिन् विषये सक्रिययोगदानम् कृतम् । शासकीयस्तरानुसारिणः संस्कृतसंवर्धनोपायाः सिद्धान्तिताः तेभ्यश्च प्रायोगिकं रूपं प्रदत्तम् ।

यथाऽस्माकं देशे राजस्थानं वीरभूमिरिति नाम्ना प्रख्यातं, तथैव भारतीयसंस्कृतेः सुदृढदुर्गरूपेणापि प्रसिद्धिमलभत। संस्कृतस्य क्षेत्रेऽस्येतिहासो गौरवान्वितो वर्तते । अस्य प्रदेशस्य माहात्म्यमपरकाशीति नाम्ना ख्यातमस्ति । यथात्रत्या महाकवयो माघहरिभद्रसूर्यादयः खस्तुर्दशमे शतके संस्कृतसाहित्याकाशमालोकयन्, तथैवास्यां शताब्द्यामपि विद्यावाचस्पतिश्रीमधुसूदन-ओझामहाभागः, म० म० श्री दुर्गाप्रसाद द्विवेदः, म० म० श्रीशिवदत्तशास्त्री, म० म० श्रीगिरधरशर्म्माचतुर्वेदः, स्वामी श्रीलक्ष्मीरामः, भट्टश्रीरामकृष्णः, श्रीमोतीलालशास्त्रीगौडः, भट्टश्रीमथुरानाथशास्त्रीत्यादयो देशस्य संस्कृतसाहित्याकाशे जाज्वल्यमानानि नक्षत्राणीव राजन्ते ।

अद्यापि आशुकविः श्रीहरिशास्त्री, श्रीयुधिष्ठिरमीमांसकः, श्रीयमुनाधरलाटः, श्रीचैनसुखदासो न्यायतीर्थः, श्रीहनुमत्प्रसादशास्त्री, जयपुर संस्कृतमहाविद्यालयीयसाहित्यविभागस्याध्यक्षः श्रीजगदीशशर्मेत्यादयो मान्या विद्वांसो देशे स्वकीयं गौरवपूर्णं स्थानं रक्षन्ति । एतद्विषयेऽपि राजस्थानप्रदेशो गौरवमनुभवति यत् सः स्वीयं प्रकाण्डमनीषामण्डितं श्रीचन्द्रशेखराख्यं पंडित जगन्नाथपुर्यां जगद्गुरोर्गौरवास्पदे पदे संस्थापयितुं राष्ट्राय समर्पितवान् ।

अस्माकं भूपालैः श्रेष्ठिभिश्च संस्कृतभाषा तच्छिक्षणं च पूर्णतया रक्षितम् । परम्परातः स्वीयसंस्कृतपोषणनीत्यनुरोधेन राजस्थानराज्यस्यापि ध्यानं संस्कृतं प्रति स्थिरीभवेदिति स्वाभाविकमेव । राजस्थानशासनं संस्कृतं पुनरुद्धर्तुं देशे प्रवर्तितेषु प्रयत्नेषु सर्वदैवाग्रवर्त्यभवत् । यथाहि—केन्द्रीयसंस्कृतायोगस्य स्थापनात् प्रागेव राज्येऽस्मिन् संस्कृत विकाससमितेर्नियुक्तिर्जाता । संस्कृत-विश्वविद्यालयेभ्यः पूर्वं संस्कृतस्य योजनानुसारिविकासं सम्पादयितुं स्वतन्त्रः संस्कृतशिक्षा-विभागः संस्थापितः । केन्द्रीयसंस्कृतमण्डलात् पूर्वमस्माकं राजस्थानराज्ये संस्कृतपरामर्शदातृमण्डलं घटितम्। प्रवेशिकोपाध्याय परीक्षयोर्माध्यमिकशिक्षामण्डलद्वारेण संचालनमकारयत् । लोकसेवायां सर्वत्र नियोजनाय संस्कृतपरीक्षाभ्य आंग्लपरीक्षाभिः सह मान्यता प्रदत्ता ।

भारतीयनेतृत्वसम्पादिका शक्तिः संस्कृतभाषायां विद्यते । राष्ट्रपितामहात्मागान्धी संस्कृतस्य ज्ञानमात्मविकासायालं मनुते स्म। स्वर्गीयः प्रधानमन्त्री युगपुरुषो नेहरूमहोदयः संस्कृतसाहित्यं देशस्य सुमहद्धनं स्वीचकार। तथैव विश्वविश्रुतस्य स्व० प्रधानमंत्रिण उत्तराधिकारी श्रीलालबहादुरशास्त्रिमहाभागोऽपि प्रतिराज्यं संस्कृतविश्वविद्यालयान् स्थापयितुं संदिष्टवान् । संस्कृतं प्रति गम्भीरनिष्ठावत्वेनैव प्रधानमन्त्री भूत्वापि निखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्याध्यक्षत्वेन राष्ट्रियसंस्कृतिलोकानामयं महन्नेतृत्वं करोति । श्री अयंगारः, श्रीपाटस्करः, श्रीचटर्जीमहोदयः, श्रीगाडगिलमहानुभावः, श्रीदेशमुखः, श्रीकाटजूमहाशयोऽस्माकं राज्यपालः श्रीसम्पूर्णानन्दश्चैते सर्व एव संस्कृतस्य ज्ञानं भारतीयपुनर्जागरणस्य साधनं स्वीकुर्वन्ति । एवं च संस्कृतस्य कृते

राष्ट्रभाषात्वस्वीकृतिं विभिन्नभाषाविवादस्य समुचितं समाधानं मन्वते। अस्माकं मुख्यमंत्री श्रीमोहनलाल-सुखाड़ियामहोदयः संस्कृतभाषां राष्ट्रियैकतायाः प्रतीकरूपां धर्मदर्शनसाहित्यादीनां क्षेत्रेषु प्राप्तोत्तमोपलब्धीनां भाण्डागारं स्वीकरोति।

एतन्महत्सौभाग्यं यत् संस्कृतस्योद्भटो विद्वान् श्रीसम्पूर्णानन्दसदृशो राज्यपालः प्रान्तीय-संस्कृत-सेविभ्यो दैवीयवरदानरूपोऽस्ति। संस्कृतस्य विविध-प्रवृत्तीनां प्रबलपोषकोऽस्माकं मुख्यमंत्री श्रीसुखाड़ियामहोदयः संस्कृतजगतो महान् निधिर्वर्तते। आभ्यां व्यक्तीभ्यां राजस्थानसंस्कृतलोक एतावानाश्वस्तो यत् तावुभावेव तस्य प्रातिनिध्यमावहतः। अयमेतयोः प्रेरणाया एव फलमस्ति यत् राजस्थाने संस्कृत-विश्व-विद्यालयस्थापनाया आशा सबला संजाता।

वयं यस्य संघस्य द्वादश-महाधिवेशनस्य सफलायां परम्परायामिमां स्मारिकां संस्कृतस्य संस्कृतेश्च परिपोषकाय श्रीमोहनलाल-सुखाड़िया-महोदयाय राजस्थानराज्यस्य मुख्यमंत्रिणे समर्पयामः. राजस्थान-संस्कृत-साहित्य-सम्मेलनस्य स्वीयमुख्यमंत्रिणो दशवर्षीयशासनकाले सम्पादितानां संस्कृतसेवाकार्याणां चानुरूपैवास्ति।

राजस्थाने संस्कृतस्य संस्कृतेश्च प्रचार-प्रसार-कार्यस्य करावलम्बदातृरूपोऽयं संघः स्वीयसमन्वितात् रंगमंचान्मौलिकान् प्रस्तावान् प्रस्तौति कार्यं च कुरुते। इतो मुख्यमंत्रिमहादयोऽपि तान् प्रपूरयन् संस्कृताय सततं बलं प्रयच्छति।

सम्मेलनस्य कृते सौभाग्यावहमेतत् यत् १६५७ तमख्रिस्ताब्दीयोदयपुराधिवेशनतः श्रीलक्ष्मीलाल-जोशीमहाभागानां नेतृत्वं प्रेरणाबलं च नैरन्तर्येण समधिगतम्। इदं सम्मेलनं विदुषां जनताया नाना-वर्गाणां च सहयोगं सम्प्राप्य संस्कृतानुरागिणां समन्वयात्मकपीठरूपेण कार्यं निर्वहन्नास्ते इति सन्तोषस्य विषयः। इदमेव कारणं यत् प्रशासनमपि सम्मेलनस्य कृतेऽविच्छिन्नं प्रश्रयं प्रददाति।

अस्य साफल्यं राज्यस्य जनतायाश्च सहयोग-भावनायाः जाज्वल्यमानं निदर्शनं वक्तुं पार्यते। सम्मेलनस्य स्वत्वाधिकारिण्याः समितेः स्थायि-सदस्यत्वेन ममाऽपि सम्मेलनेन सह सम्बन्धो वर्तते।

अतोऽस्मिन् शुभावसरेऽहं सम्मेलने समवेतान् संस्कृत-विदुषः, संस्कृतानुरागिणो जननायकान्, स्वागतसमितेः सदस्यान्, पदाधिकारिणो, दान-दातॄन्, प्रत्यक्षतया सहयोगप्रदातॄन् च प्रति स्वकीयां कृतज्ञतां प्रकाशयितुं कामये, येषामदभ्योत्साहेनाश्रान्तश्रमेण सक्रियसहयोगभावनया च सम्मेलनस्येयं भव्या स्मारिका द्वितीयवारं मूर्तीभूता।

स्मारिकेयं संग्रहरूपेणातितरामुपयोगिनी संसिध्येदिति मे विश्वासः।

संस्कृतशिक्षाक्षितिजे नवारुणोदयाकांक्षां समीहे।



# राजस्थान-संस्कृत-साहित्य-सम्मेलनस्य तत्त्वावधाने भीलवाड़ा-नगरे संस्कृतशिक्षापरिषदः समुद्घाटकानाम्

## डॉ० मण्डनमिश्राचार्याणाम् उद्घाटनभाषणम्

राजस्थाने विराजमानेऽस्मिन् भीलवाडाभिधाने व्यवसायप्रधाने नगरे राजस्थानसंस्कृत-साहित्य-सम्मेलनस्य तत्त्वावधाने समायोजितायाः संस्कृत-शिक्षा-परिषद उद्घाटनार्थमत्रामन्त्र्य तत्रभवद्भिर्भव-द्भिरहं यद् गौरवास्पदं पदमध्यारोपितः, तदर्थमहं सम्मेलनस्य स्वागत-समितेश्च कृतज्ञोऽस्मि । वस्तुतो भवादृशेषु शिक्षाविशारदेषु शिक्षामधिकृत्य किमपि कथनं मत्कृते दुष्करमेव स्यात्, तथाप्यस्याः परिषदो-ऽध्यक्ष-पदे विराजमानानां प्राच्यपाश्चात्य-विद्या-विशेषज्ञानां राजस्थान-विश्वविद्यालयोपकुलपति-चरणानां डा० श्रीमथुरालालशर्ममहानुभावानां तथाऽन्यविदुषाञ्च संरक्षणे किञ्चित् साहसमात्मनि सञ्चरदनुभवामि । पितापितामहादिभिः संरक्ष्यमा-णस्य बालकस्य निःशङ्कता किल स्वाभाविकी एव ।

ममास्य साहसस्यापरमपीदं कारणं वरीवर्ति यद् राजस्थानं मम मातृभूमिरस्तीति । अस्मिन् समस्तेऽपि च राजस्थानप्रदेशे भीलवाडाक्षेत्रेण साकं स्वकार्यैः सम्बन्धविशेषैरहं भृशं प्रोत्साहितः । ममाय-मभिमानस्य विषयो यद् भीलवाडा मदीयानां सामा-जिकीनां सेवानां भूमिरवर्तत, अत्रत्यसामाजिकै-स्तत्रापि विशेषेण संस्कृतक्षेत्रसम्भवैः क्रियाकलापैः सह मम प्रयोगात्मकः सम्पर्कोऽवर्तिष्ट ।

संस्कृतभाषाया स्तन्महिमातिशयस्य वा विषये तत्रापि विशेषेण संस्कृतस्यैव मञ्चे संस्कृतकोविदानां तत्र भवतां समक्षं किमपि कथनं केवलं कालयापन-मात्रम् । अतोऽहमिदमुचितं मन्ये यथा स्वविचारान् शिक्षामात्रे केन्द्रयित्वा भवतां पुरस्तादुपस्थापयेयेति ।

अहमिदं तथ्यं तावत्प्रथममेव प्रथयितुमपेक्षितं जाने यद् राष्ट्रियशिक्षायाः संस्कृतशिक्षायाश्च मूल-समस्यासु किञ्चिदन्तरं न विद्यते । वस्तुतोऽस्माकं कृत्स्नापि शिक्षा साम्प्रतं सङ्क्रमणकालमध्यात् क्राम्यन्ती वर्तते । अस्माकीनपराधीनता-युगे आङ्ग्ल-शासकैः कापि शिक्षापद्धतिः प्रवर्तिताऽभूत्, सैवाद्यास्म-दीयायाः स्वाधीनतायाः सप्तदशस्वपि वत्सरेषु व्यतीतेषु प्रायेण तेनैव रूपेण प्रवहमाना वर्वर्ति । यदि तस्यां केचन नवीनाः प्रयोगाः विहिताः तर्हि ते विशेषफलप्रदाः नैव सिद्धा अभूवन् । राष्ट्रस्य प्रत्येकं जागरूकः पुरुषोऽनया शिक्षापद्धत्या अपरितुष्यन्न-वेक्ष्यते । प्रशासनेनापि समये समये तांस्तान् आयो-गान् नियोज्यास्यां दिशि भूयो विचिन्तयितुं विचार-यितुं वा प्रायत्यत । तेषामेव प्रयत्नानां परम्परायां गतेऽब्दे केन्द्रीयशिक्षामन्त्रालयेनैकस्य नूतनस्य शिक्षा-ऽऽयोगस्य नियोगेन अन्योऽपि क्रमः समुपन्यस्तः । एतानि सर्वाण्यपि प्रमाणानि तावदेतद् विज्ञापयितुं पर्याप्तानि सन्ति यदस्माकं सर्वकारोऽपि वर्तमान-शिक्षापद्धत्या नैव सन्तुष्टोऽस्ति तथाऽस्मदीयमिदं राष्ट्रं शिक्षाविषयेऽद्यापि काञ्चिदप्येकां नीतिं न निर्धारित-वदस्ति । अद्यापि च प्रायस्तस्यामेव दिशि भ्राम्यति, यस्यां स्वातन्त्र्यलाभात् प्राग् अभ्राम्यत् ।

लोकतन्त्रस्य सिद्धिः शिक्षापद्धति-सफलतायां

समाश्रिता वर्तते, अतः शिक्षाविषये नूनमेतादृशी सन्दिग्धता कस्यचनापि लोकतन्त्रस्य कृते शुभं लक्षणं नास्ति। अयं दुर्भाग्यातिशयस्य विषयो यदद्यापि लक्ष्योपगमनं तु दूर एवास्ते, वयं तु तल्लक्ष्यलब्धेर्मार्गमपि मार्गयमाणा वर्तेमहि। नवैर्नवैः प्रयोगैर्नूतनाभिश्च विज्ञप्तिभिरयं प्रश्नस्तथा दुरूहतां नीतोऽस्ति यथाऽद्य महान्तो महीयांसश्च शिक्षाशास्त्रिणोऽप्यस्मात् प्रश्नादुदासमाना दरीदृश्यन्ते।

वस्तुतः शिक्षा साधनमात्रम्, न तु साध्यम्। शिक्षा हि नाम मार्गविशेषो नतु लक्ष्यविशेषः। अतः शिक्षापद्धतेर्निर्धारणात् प्रागस्माभिरिदं निर्णेतव्यं यदिह शिक्षया तावत् किं महल्लक्ष्यमस्माकं प्रापिप्सितमिति। ततः परमेव तन्निर्णेतुं शक्ष्यामः, यथा तस्य लक्ष्यस्योपलब्धये कतमा पद्धति रुपयुज्यत इति।

शिक्षाया लक्ष्यं नास्ति विवादास्पदम्। केवलं लक्ष्यस्याङ्गेषु किञ्चित्परिवर्तनमावश्यकं जातम् यतो हि गताभ्यः कतिपयीभ्यः शताब्दीभ्यो महदन्तरमापतितमस्ति, मानवस्य अभ्युदयः शिक्षाया लक्ष्यम् वरीवर्ति, अभ्युदयश्च तथा व्यापकार्थः, यथा तस्मिन् सर्वतोमुखी प्रगतिः समाविष्टा भवति। सर्वतोमुख्यां प्रगतौ च मानवस्याभ्युदय एव राष्ट्रस्य विश्वस्य वाऽभ्युदयः स्यात्। ज्ञानक्रिययोः समन्वय एवाभ्युदयमूलम्। अनया दृष्ट्याऽस्य महतो लक्ष्यस्य पूर्तये सैव शिक्षापद्धतिरास्माकीनस्य राष्ट्रस्य श्रेयसे कल्पेत, यस्यां ज्ञानक्रिययोः समीचीनः समन्वयः स्यात्। सैव शिक्षा च 'सत्यं, शिवं, सुन्दरम्' इत्यादि विशेषणैर्विशिष्टस्याऽऽदर्शचित्रस्याऽऽभासमस्मद्राष्ट्रस्य समक्षमुपस्थापयितुमलं भविष्यति।

अस्यां चोक्तौ नास्ति सङ्कोचावसरो यथा ज्ञानक्रिया-समन्वयस्य दृशा वर्तमाना शिक्षापद्धतिरत्यन्तमसाफल्यं प्राप्तवतीति। अस्मदीयायां प्राचीनायां शिक्षा-पद्धतौ ज्ञान-जीवनयोरेतावदन्तरं कदापि नाभूत् यावदद्यतन्यां शिक्षापद्धतौ वरीवर्ति। वेदभगवानप्याह—

**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते। इति**

अस्या उक्तेरपि मूले तावदियमेव भावनाऽजागरीत् यथा यज्ज्ञानं जीवनेऽवतरति, क्रियात्मतामापद्यते, तदेव अमृतत्वोपलब्धये कल्पते, अन्यथा तु ज्ञानं भार एव।

**शास्त्राण्यधीत्यापि भवन्ति मूर्खा**
**यस्तु क्रियावान् पुरुषः स विद्वान्।**

इत्यादिभिः सुभाषितैः परवर्तिभिरपि विद्वद्भिर्ज्ञानक्रिययोः समन्वये भूयो बलमाहितम्। महाभाष्यकारो भगवान् पतञ्जलिरपि व्यवहार एव ज्ञानस्य पूर्णतां प्रतिपादयति।

चतुर्भिः प्रकारैर्विद्योपयुक्ता भवति-आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेन चेति।

व्यवहाराभावे ज्ञानस्यापूर्णतायामितः स्पष्टतरा घोषणाऽन्या कतमा स्यात्?

अयमेव सर्वानर्थमूलभूतः प्रथमो दोषः, येनाद्य शिक्षायाः शिक्षितानाञ्च मूल्यं प्रतिदिनं हीयमानमवलोक्यते। अद्यैकतो विश्वविद्यालयेभ्यो निर्गता लक्षाधिकाः स्नातका जीविकानुपलब्धेराक्रोशन्तोऽवलोक्यन्ते, यतो हीदं तेषां जीवनोपयोगि न भवति। अपरत्र चोपयुक्तानां कार्याणां कृते उपयुक्ता व्यक्तयो

न लभ्यन्ते। निर्धनतरस्य कृषीवलस्य पुत्रो विश्वविद्यालयस्य स्नातको भूत्वा ग्रामवासे, कृषिकर्मणि च लज्जामेवानुभवति। कृषिमहाविद्यालयेभ्य. प्रतिवर्षं समावृत्ताः सहस्राधिकाः स्नातका अपि कृष्येभ्यः क्षेत्रेभ्यो दूरे वसन्त एव प्रसादमनुभवन्ति। चिकित्साविज्ञाने निष्णातानां विदुषां कृते विज्ञानस्य लक्ष्यं मानवतायाः परिचर्यैव तावदुच्चार्यते, किन्त्विय मेव परिचर्या यदि ग्रामेषु करणीया भवति तदा ते सङ्कुचन्ति चेखिद्यन्ते च। संस्कृतस्नातका नैतिकता त्याग, सहिष्णुतादीनां सहस्राणि उपदेशान् कण्ठस्थीकुर्वन्ति परं जीवनक्षेत्रे एतान् विस्मरन्ति। समुद्भूतात्मबलस्याभावेनैव हीनताया एकस्या दर्शनं तेषु भवति। ज्ञानक्रिययोः समन्वयस्याभावः कर्तव्यं प्रति निष्ठां विध्वस्य राष्ट्रमेतादृश्यां समस्यायां निक्षिप्तवानस्ति, यां समाधातुं धैर्यं विवेकश्चापेक्ष्येते।

अस्ति राष्ट्रस्यायं विश्वासः, यदेतानेव मूलभूतान् विचारान् पुरस्कृत्य केन्द्रीयेण प्रशासनेन नवीनस्य शिक्षाऽऽयोगस्य विनियोगो विहित इति। परमयं खेदस्य विषयो यदायोगसंघटन-प्रक्रियया क्रियाऽऽरम्भात् प्रागेवायं विवाद-विषयीकृतः आयोगे केचन वैदेशिकाः शिक्षाशास्त्रिणोऽपि परिगृहीताः सन्ति किन्तु पूर्वोक्तदृष्टिभिः सम्पन्नेभ्यो राष्ट्रपित्रा गान्धिमहात्मना, गुरुदेवेन रवीन्द्रनाथठाकुरेण, गुरुकुलप्रणाल्या, अन्यैश्च तपस्विभिर्मनीषिभिः शिक्षाक्षेत्रे कृतेभ्यो नूतनप्रयोगेभ्यः प्राच्यविद्याविशारदेभ्यश्चास्मिन्नायोगे किमपि प्रतिनिधित्वं न वितीर्णमस्ति। अतोऽस्मिन् प्रसङ्गे शिक्षामन्त्रालयं प्रति आयोगं प्रति चेदं निवेदनमनिवार्यमिव प्रतिभाति, यत्तौ स्वकार्येण, व्यवहारेण, परामर्शैश्च तत्संघटने निर्दिष्टानां त्रुटीनां निवृत्तये प्रयतेतामिति।

अस्यामेव पृष्ठभूमौ आयोगेन सर्वकारेणचेदमपि विचारणीयं स्याद् यद् आस्माकीनस्य राष्ट्रस्य काचिद् विशिष्टा परिस्थितिरस्ति। अस्य महतो राष्ट्रस्य स्वकीयाः परम्पराः सन्ति। भूयसीनां जातीनां, भूयसां धर्माणां, भूयसीनाञ्च भाषाणां बह्वीनां सभ्यतानामनेकासां च धाराणाम् अस्मिन् राष्ट्रे च स्वं स्वं स्थानं विद्यते। भारतीयया संस्कृत्या केवलमेकस्मिन् शाश्वते प्रवाहे परिणमय्य एतासु विभिन्नतास्वपि काञ्चिदखण्डतां स्थापयितुं प्रयत्नः कृतो विद्यते, तया चात्र माध्यमतयाऽध्यात्ममेव पुरस्कृतम् एतेनाध्यात्मयोगेनैवेदं राष्ट्रं जगद्गुरुत्वगौरवमलभत। अतएव—

**एतद्देश-प्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥**

इति स्म प्राह भगवान् स्वायम्भुवो मनुः। अयं खलु महीयस आश्चर्यस्य विषयो यदस्माकं संविधाने उद्घोषिताया धर्मनिरपेक्षतायाः धर्महीनतेत्ययमर्थोऽवधारितो धीरैः। अस्यैव चार्थस्यायं प्रभावो यदस्माकं शिक्षाऽऽध्यात्मिकेभ्योऽध्यादर्शेभ्यो दूरीकृता विद्यते। अतः प्रेम्णो भक्त्या वा मानवस्य मानवेन साकं संयोजिका या सर्वोत्कृष्टा शक्तिरस्ति-तस्याः कृते कुत्रापि स्थानं नावशिष्टम्।

इदं तावन्निर्विवादम्-यत्कस्यचिदपि राष्ट्रस्य भौतिकं विकासम्, आर्थिकञ्चाभ्युदयं साधयितुं

विज्ञानसम्बन्धिनां विषयाणां विद्यानां च किञ्चिदपरिहार्यं महत्त्वं भवति। किन्तु तावता वयं तदतिरिक्तानि जीवनीयतत्त्वान्युपेक्षितुं नार्हामः। कस्यचित् स्वतन्त्रस्य समृद्धस्य च राष्ट्रस्य कृते तदीयायाः प्राचीनसंस्कृतेः पुरातनपरम्पराणाञ्च ज्ञानं सम्मानं वा नानधिकं महत्त्वं भजते। कस्यचनापि राष्ट्रस्य राजनैतिकं, सांस्कृतिकं सामाजिकञ्च जागरणं तदीयात्प्राचीनादितिहासात्प्रेरणां प्राप्नोति। नूनमिदं महद् दौर्भाग्यम्, यदस्माकं शिक्षायामिमा मौलिक्यो भावनाः किमपि स्थानं न लब्धवत्यः। अद्यतनी शिक्षापद्धतिरस्मान् भारतीयताया दूरं नयमानास्तीत्यवितथम्। अहं मन्ये यदि शिक्षापद्धतौ अध्यात्मस्य, आचारस्य, श्रीप्रकाशसमित्यनुशंसानुसारं नैतिकतायाश्च महत्त्वं स्थाप्येत तदा राष्ट्रस्य चरित्रं निष्ठा च समुच्चतरं स्तरमारोहेताम्।

शिक्षाजगतस्तावदेताभ्यो मूलसमस्याभ्यः संस्कृत शिक्षायाः कतिपय्यः स्वीयाः समस्या अपि विद्यन्ते। इदञ्चावितथमेव यद् यावदस्य राष्ट्रस्याध्यात्मिकानां मूल्यानां सांस्कृतिकानाञ्च निधीनां संरक्षणं प्रचारणञ्च विचारणीये स्तः, तावदियं संस्कृतशिक्षाऽत्र देशे प्रचलन्तीनां सर्वासां शिक्षाणामपेक्षयाऽधिकतरमुपयुज्यते। किन्तु यद्येषा संस्कृतशिक्षा जगति जिजीविषिता स्यात्तदा अवश्यमेवेदमवधेयम्—यथेयं वर्तमानायां स्थितौ जीवनं धारयितुं न शक्नोति। अस्मिन् लोकतन्त्रात्मके युगे कुतश्चनापि शिक्षापद्धतेरिदमाशास्यं भवति यत्सा राष्ट्रस्य जनानां लक्षाणि कोटींश्चाभ्युदयमार्गमारोहयेदिति। अहमत्र विषयेऽन्धश्रद्धां वाऽऽग्रहं वा नानुमोदयामि, न समर्थयामि। केवलायां संस्कृतभाषायां सुष्ठुतमं साहित्यमस्तीत्ययं प्राचीनतरः प्रवादः, इयं गैर्वाणी वाणीत्येतावता गुणाख्यानेनाप्यलम्। वयं तु वर्तमानं प्रति सावधाना भूत्वा विलोकयेम यदस्य गुणगौरवस्य वर्तमानेन सह समन्वयं सम्पाद्य प्रयोगः क्रियेत, कर्तुं वा शक्येतेति। यदि वयमेतावदपि कर्तुमशक्नुम, तदाऽयमेवास्माकं संस्कृतभाषां प्रति पारमार्थिकः श्रद्धाञ्जलिर्भविष्यति, राष्ट्रस्य च वयमेकां नूतनां दिशं दर्शयिष्यामः।

श्लाघनीयोऽयं विषयः, यदद्य बहुभिर्विश्वविद्यालयैः, कतिपयैश्च प्रादेशिकप्रशासनैरिदं तथ्यमवगत्यार्य संस्कृतशिक्षायां कानिचिन्महत्त्वपूर्णानि परिवर्तनान्युपक्रान्तानि सन्ति। परन्तु यथा मया पूर्वमपि निवेदितम्—तथेयं संस्कृतशिक्षापि साम्प्रतं कासुचित् पाठशालासु वर्गविशेषेषु वा नियन्त्रिता रक्ष्येतेति न साम्प्रतम्। महता महीयसा च परिमाणेन राष्ट्रस्याधिका अधिकतरा लोका अनयालाभान्विताः स्युरिति तावदस्माभिः प्रयतितव्यम्। न चान्यः पन्था विद्यतेऽस्मै प्रयत्नाय, ऋते संस्कृतशिक्षाया राष्ट्रियस्तरेण पुनः संघटनात्। राष्ट्रियशिक्षेति बृहत्तरं नाम शृण्वन्तः कतिचनाश्चर्यचकिताः सम्पद्येरन्, कल्पनातीतां चेमां महत्त्वाकाङ्क्षामाचक्षीरन्, वस्तुतोऽयं नाश्चर्यकरः प्रयोगः, नापि चकितीकरणपटीयसी कल्पना, न चेदं किञ्चिदसम्भवम्। 'राष्ट्रियशिक्षास्तर' इति शब्देन च मम तावन्नैतदेव विवक्षितम्, यद् राष्ट्रस्य साधारणीं शिक्षापद्धतिं निरस्य तत्स्थाने संस्कृतशिक्षेयं प्रतिष्ठाप्येतेति। मम त्वेतावदेवाभिप्रेतम् यथा संस्कृतशिक्षायाः सञ्चालनं तेनैव रूपेण सम्पादनीयं येन रूपेण राष्ट्रियशिक्षायास्तत् सम्पाद्यते

अनया व्यापिकया दृशा विचारणायां क्रियमाणायां संस्कृतशिक्षासम्बद्धा भूयस्यः समस्या अस्माकं पुरस्तादुपस्थास्यन्ति। संस्कृताऽऽयोगेन, केन्द्रीयसंस्कृतमण्डलेन संस्कृतसम्बद्धाभिर्विभिन्नाभी राज्यसमितिभिस्तासां समस्यानां केषुचिदंशेषु राष्ट्रस्यमार्गदर्शनं विहितम्। परं तावता कार्यं न सेत्स्यति। अत्र तावदिदमपेक्षितम् यद् राष्ट्रियस्तरेण संस्कृतशिक्षाविकाससिद्ध्यर्थं सामूहिकाः प्रयत्ना आद्रियेरन्। इदानीं द्वावेव मार्गावस्माकं समक्षे वर्तेते —संस्कृतशिक्षणालयान् वा साधनसम्पन्नान् विधाय साधारणशिक्षणालयस्तरमानयेम, तान्वा समापयेम। तत्रायं समापनमार्गो नैव राष्ट्रहिताय, नैव च विचारकजनाभिरुचये सम्पद्येतेति तावदहं मन्ये। अतः केवलं संस्कृतशिक्षणालयानां विकासार्थं सुनियोजितः कार्यक्रम एव घटनीयतयाऽवशिष्यते, तत्रास्माभिः प्रयतनीयम्।

गतेभ्यः सप्तदशभ्यो वर्षेभ्यो वयं स्वतन्त्रा वर्तेमहि, संस्कृत संरक्षणप्रचारणविषये च केन्द्रीय-प्रादेशिक-प्रशासनैरौदार्यपूर्णा नीतिरप्युद्घोषिताऽस्ति तथापि संस्कृत शिक्षायाः स्थितिरद्याप्यनिश्चितैव वर्वर्ति। नाद्यापि तदीया विद्यालयाः समाप्यन्ते नापि च ते समुचितं स्तरमारोप्यन्ते। भूयांसि चैवंविधान्यपि कार्याणि न क्रियन्ते यैः प्रशासनानि आर्थिकं भारं वोढुं बाध्यानि न भवेयुः। नाद्यापि संस्कृतपरीक्षास्वेकरूपताऽऽनीयते। क्वचिद् शास्त्रीत्युपाधिर्दीयते, क्वचिद् शिरोमणिरिति, क्वचिच्च तीर्थमिति पाठ्यक्रमस्य स्थितिस्त्वितोऽपि विलक्षणतरा वरीवर्ति। क्वचित्स्नातकत्वं चतुर्दशभिर्वर्षैरवाप्यते, क्वचिद् द्वादशभिः, क्वचिच्च दशभिः। एकस्मात् प्रदेशादागतश्छात्रः प्रदेशान्तरभवां तत्समस्तरामप्यग्रिमां परीक्षां न प्रवेष्टुमर्हति। केन्द्रीयप्रशासनं तावदिमं प्रश्नं प्रादेशिक-प्रशासनेषु निक्षिपति, प्रादेशिकप्रशासनानि चेदं कार्यं सम्पादयितुमसमर्थानि प्रतिभान्ति।

वस्तुतोऽयं समेषां प्रदेशानां परीक्षापद्धत्याः पाठ्यक्रमस्य चैकीकरणेन सम्बद्धः प्रश्नो विद्यते। केनचिदप्येकेन प्रादेशिकप्रशासनेन विषयेऽस्मिन् किमपि निर्णेतुं दुःशकम्। अतः केन्द्रीयप्रशासनस्यैव कार्यमिदम्, तेन हि सर्वेषां प्रदेशानां शिक्षाधिकारिणामेकमुच्चस्तरीयं सम्मेलनमायोज्य परीक्षासु पाठ्यक्रमे चैकरूपता प्रतिष्ठापयितव्या।

संस्कृतपाठशालानां स्थितिस्तु तावदितोऽप्यतितरां दयनीया विद्यते। उत्तरप्रदेश-राजस्थानप्रभृतिषु राज्येषु ताः साधारणशिक्षणालयस्तरमारोपयितुं प्राथमिकाः प्रयत्नाः समाद्रियन्त, किन्तु देशस्य भागान्तरेष्वद्य किलैतादृश्योऽपि पाठशाला विद्यन्ते यत्र शास्त्रि (बी० ए०) परीक्षाया आचार्य (एम०ए०) परीक्षायाश्च विद्यार्थिनोऽध्याप्यन्ते, परं तासां स्तरो माध्यमिकपाठशालाभिरपि समानो नास्ति। अद्याप्येतासां पाठशालानामध्यापकास्त्रिंशद्रूप्यकात्मकं वेतनं लभन्ते। इयमेकाऽतिगभीरा समस्या महत्तरेण धनराशिना समाधेयाऽस्ति। केन्द्रीयप्रशासनेनाध्यापकानां वेतनमानं परिष्कर्तुं स्वयं प्रतिज्ञातम्। अत एवेदमावश्यकं प्रतिभाति यत् प्रशासनम् एतासां संस्थानां सर्वेक्षणं कारयित्वा ता यथोचितं स्तरमारोपयेत्। अधिकाधिका केवला एकाकोटी रूप्यकाणां प्रतिवर्षं व्ययिता चेत्तदा पूर्वोक्ताः सर्वा अपि

विषमताः समापयितुं शक्यन्ते । अहं विश्वसिमि यत् चतुर्थ्यां पञ्चवर्षीयायां योजनायां तु केन्द्रीयाणि प्रादेशिकानि च प्रशासनानि कार्यक्रममिममनिवार्यरूपेण स्वीकरिष्यन्ति इति ।

संस्कृतशिक्षामुच्चस्तरमारोपयितुं विभिन्नेषु प्रदेशेषु संस्कृतविश्वविद्यालयानां स्थापनाऽपि सम्भवति । एतस्या औचित्यमस्माकं श्रद्धेयः प्रधानमन्त्री श्रीलालबहादुरशास्त्री अपि स्वकोयेनाशीर्वादेन समर्थितवानस्ति । इदं च ततोऽपि गौरवास्पदम् यत् प्रधानमन्त्रिणस्तां विज्ञप्तिं सर्वतः प्रथमं राजस्थानप्रशासनं संस्कृतविश्वविद्यालयस्थापनद्वारा क्रियान्वितां कुर्वदास्ते । अयमेकः सुवर्णे सुगन्धिसंयोगो यत्पञ्चभ्यो वर्षेभ्यः प्राग् भीलवाडासम्मेलने मया संस्कृतविश्वविद्यालयस्थापनार्थं प्रार्थितमासीत्, अद्य च तत्प्रार्थितं क्रियान्वितं भवद् विलोकयतो मे हर्षप्रकर्षो जायते । अनेनापि च गौरवेण भीलवाडासम्मेलनमेव दिष्ट्या वर्धतेतमाम् । ममैष च सुदृढो विश्वासः यद् राजस्थानप्रशासनस्यामुमभिनन्दनीयं प्रयासं प्रदेशान्तरप्रशासनान्यपि नूनमनुकरिष्यन्ति ।

प्रत्येकं राज्ये चैकस्य संस्कृतविश्वविद्यालयस्य साद्भावेनां तस्य कश्चित् महान् भारोऽपि न भवति । वस्तुतः प्रशासनानां कर्तव्यमिदम् यद् यस्यै शिक्षापद्धत्यै तानि मान्यतां वितरन्ति । तस्या व्यवस्थितमौचित्यपूर्णञ्च सञ्चालनमपि तानि कुर्वीरन् । केवलं विश्वविद्यालय एवैकं सर्वसम्मतं माध्यमं विद्यते, येन शिक्षा समुचितमाश्रयं लब्धुमर्हति ।

चतुर्थः प्रश्नः संस्कृतोपाधिमान्यतया सम्बध्यते । कतिपयैर्देशकैः संस्कृतपरीक्षास्वनेकेषु स्थलेषु साम्प्रतिका विषया अपि समावेश्यन्त । किन्त्वद्यापि यदा वयं प्रशासनस्य भिन्नभिन्नैरधिकारिभिः सह सम्पर्कं साधयामः, तदा ते प्रथममुपादिशन्ति यत्संस्कृतस्नातका आधुनिकैर्विषयैरपरिचिता भवन्ति । तेषामिममुपदेशमाकर्ण्य कदाचित् क्षोभोऽपि भवति, कदाचिच्च दयाप्युदेति । अधिकारिणामस्या अस्पष्टतायाः खल्विदमेव कारणं भवति यदद्यावधि केन्द्रीयस्तरेण काचिदप्येतादृशी स्पष्टा घोषणा न जातास्ति । विश्वविद्यालयानुदानाऽऽयोगस्य केन्द्रीयप्राशासनिकगृहमन्त्रालयस्य चेदं कर्तव्यं विद्यते यत्तौ समस्तानपीमान् प्रश्नानुररीकृत्याऽऽधुनिकविषयज्ञानशालिभ्यः शास्त्रिभ्य आचार्येभ्यश्च ता एव सुविधास्तानेव चाधिकारान् प्रदद्युः, याश्च ये च बी०ए०, एम० ए० समुत्तीर्णेभ्यो दीयन्ते । इदं च नाम नास्मन्मतिमास्कन्दति यद् एतादृशसमत्वस्थापने प्रशासनस्य किं हीयते, केवलमिदमेवोद्घोषणीयम्—आधुनिकविषयज्ञानसम्पन्नाः शास्त्रिणः प्रादेशिकीनां सेवानाम् ( आर० ए० एस०, पी० सी० एस० आदि) अखिलभारतीयसेवानां च प्रायोगिकीषु परीक्षासु (आई०ए० एस०, आ।ई० पी० एस०) अपि तथैव प्रवेशाधिकृता भविष्यन्ति यथा बी० ए० उपाधिभृतो भवन्ति । अदसीयद्वितीयभागस्य सम्बन्धो विश्वविद्यालयानुदानाऽऽयोगेन सह वर्तते । अद्याधिकतरा विश्वविद्यालयाः शास्त्रिणं संस्कृतविषये एम० ए० परीक्षाप्रवेशानर्हं । मन्यन्ते । किन्तु तेषामन्तिके कश्चनापि युक्तिसङ्गतस्तर्को न विद्यते । एवमेव विश्वविद्यालयेषु संस्कृताध्यापकानां नियुक्तिवेलायामपि केवलानां संस्कृत एम० ए० परीक्षोत्तीर्णानामावेदनपत्राण्यामन्त्र्यन्ते, नत्वाचार्याणाम् । इदं तावत्सर्वसम्मतं

तथ्यं; यथा आचार्या एम० ए० परीक्षोत्तीर्णेभ्यः संस्कृते योग्यतरा भवन्ति। पुनश्चामी यदा शास्त्रि-पर्यन्तमाधुनिकान् विषयान् आङ्ग्लभाषादीनप्यधीतवन्तः, आचार्यकक्षायामपि च तुलनात्मकमध्ययनं सम्पादितवन्तः, तदा तेषाम् आवेदनपत्रप्रदानावसरमदत्त्वा केवलमेकाधिपत्यस्य परिचयमात्रं दीयतेऽधिकारिभिः, यत्खलु शिक्षाक्षेत्रे तु नितान्तमेवानुचितम्। अस्मिन् साधारणेऽपि प्रश्ने विश्वविद्यालयानुदानाऽऽयोगोऽद्यावधि कमपि निर्णयं कर्तुं न प्राभवत् विभिन्नानां विश्वविद्यालयानां स्वतन्त्राधिकारक्षेत्रनाम्नाऽस्य प्रश्नस्य परिहारः सहज इति न युज्यते वक्तुम्, प्रश्नो हि तावदयम् अखिलभारतीयनीतिनिर्धारणसापेक्षः। अतो विश्वविद्यालयानुदानाऽऽयोगं प्रति मदीयमिदं पुष्टिं निवेदनं विद्यते यत्स एतेषां स्नातकोपाधीनां पाठ्यक्रमानवलोक्योपकुलपतीनां सम्मेलनद्वारैतस्या मान्यतायाः कारयेदिति।

इयमेव स्थितिः प्रथमामध्यमादिपरीक्षाणां मान्यतासम्बन्धेऽपि वर्तते। सहस्रशः स्नातका अद्यापि एतासु परीक्षासु प्रविशन्ति। स्वजीवनं च संस्कृतशिक्षायां यापयन्ति। तेऽप्यस्य राष्ट्रस्य नागरिकाः सन्तीत्यपरनागरिकवदधिकारेषु सुविधासु च तेऽप्यधिकृताः सन्ति, येषां ते पात्रतां बिभ्रति। इदं तावत्केन्द्रीय शिक्षामन्त्रालयस्योत्तरदायित्वं विद्यते यत्स समस्तमाध्यमिकशिक्षापरिषदामध्यक्षाणां सम्बद्धानां विश्वविद्यालयाधिकारिणां चैकमधिवेशनमायोजयेत्, एतेषां विदुषां भविष्यञ्च निर्णयेतेति। केन्द्रीयप्रशासनेन केन्द्रीयसंस्कृतमण्डलस्य परामर्शेन सामान्यया शिक्षया सह संस्कृतशिक्षायाः समस्तानां परीक्षाणामुपाधीनां च मान्यताया निर्देशाः प्रसारिताः सन्ति, किन्तु तत्राप्यस्माकं वचनावसरो विद्यते, यत् तेषां निर्देशानां प्रादेशिक प्रशासनेषु कश्चनापि प्रभावो नोपलक्ष्यते। वयं त्वेतावदेव प्रार्थयामो यत् संस्कृतस्नातकानां कृते तानि सर्वाणि द्वाराणि उद्घाट्येरन् येषु ते प्रवेशमर्हन्ति। एतत्कथयतो मम नायमभिप्रायो यत्पाठ्यक्रमं वा योग्यतास्तरं वाऽनवलोक्यैव संस्कृतस्नातकेभ्यो मान्यता दीयेतेति। उच्चात्युच्चशिक्षाविशारदैः सर्वस्याप्यस्य प्रश्नस्य गवेषणा कार्येतेत्यहं सम्मन्ये। किन्तु गतेषु सप्तदशसु वर्षेषु यथेयं संस्कृतशिक्षा अनाथवत्, उपेक्षितवच्च परित्यक्ता, तन्नास्य राष्ट्रस्य शोभाकरम्। अनया संस्कृतशिक्षया सह सहस्रशो जनानां भविष्यस्य जीविकायाश्च साक्षात्सम्बन्धो विद्यते।

एतेभ्यः प्रश्नेभ्योऽतिरिक्ताः संस्कृताध्ययनाध्यापनसारल्येन, राजस्थानवत्प्रतिराज्यं संस्कृतशिक्षानिदेशालयस्थापनया च सम्बद्धा अनेकेऽवान्तर प्रश्ना अपि विद्यन्ते। किन्त्वहं मन्ये यदि नामोपर्युक्तान्तःप्रश्नाः समाधीयेरन्, तदा संस्कृतशिक्षा स्वयमेवैकं स्तरमारोक्ष्यति। वयं नाभिलषामः, यथेयं संस्कृतशिक्षा केवलं दयां वा धर्मं वाऽवलम्ब्यैव प्रचलेत्। अस्मदभ्यर्थनायास्त्वयमभिप्रायो भवेत् यत्संस्कृतशिक्षाक्षेत्राद्ये स्नातकाः समावर्तन्ते तेभ्यो योग्यतानुरूपम् औचित्याधारेण सकला अपि सुविधाः, सर्वेऽपि चावसराः प्रदीयेरन्निति संस्कृतशिक्षणालया अपि शिक्षणालयान्तरवत् साधनसम्पन्नाः क्रियेरन्निति च।

अद्य सामान्याः शिक्षाधिकारिणोऽपि प्रसारदृष्ट्या संस्कृतशिक्षायास्तया शिक्षया सह तुलनां कर्तुमिच्छन्ति, यस्याः प्रचारप्रसारयोः शताब्दीभिः

अर्बुदानि रुप्यकाणां व्ययितानि भवन्ति यस्यै च सर्वविधानि संरक्षणानि दत्तानि सन्ति । ममेयं धीरा धारणाऽस्ति यत् केन्द्रीयं, प्रादेशिकानि च प्रशासनानि यदि केवलं दशकद्वयं यावदपि तस्य द्रव्यस्य संरक्षणस्य च दशममप्यशं संस्कृतशिक्षार्थं प्रदद्युः, तदा तदीयं नवीनं स्वरूपमस्मै राष्ट्राय प्रचलितशिक्षापेक्षयाऽधिकमेवोपकारकं प्रभविष्यति, कलाक्षेत्रेषु तु तावदियम् आदर्शराष्ट्रियशिक्षापदमधिकरिष्यति सा च।स्य देशस्य स्वकीया शिक्षापद्धतिर्भविष्यति ।

ममैष सुदृढो विश्वासः, यदस्मिन् पावने आन्दोलनेऽपि संस्कृतशिक्षायाः क्षेत्रान्तरवत् राजस्थानं कृत्स्नस्यापि देशस्याग्रणीर्भविष्यति, संस्कृतशिक्षां च राष्ट्रियस्तरमारोपयितुं यं प्रयासम् अखिलभारतीयसंस्कृतसाहित्यसम्मेलनम् अनुतिष्ठति, तत्र भवतां भवतां सर्वेषामपि सक्रियः सहयोगोऽस्माभिर्लप्स्यत इति । एतैरेव शब्दैरहमस्याः परिषद उद्घाटनाख्यं कर्म सम्पादयामि ।

## सुभाषितानि

संग्रहकर्ता—हरिहर त्रिवेदी

यः सज्जनो जगति यश्च खलैकवृत्तिर्-
द्वावप्यलीकवचसावभिदध्महे तौ ।
एको गुणानसत एव यतः परस्य
वक्तीतरः खलु सतोऽपि विनिह्नुते तान् ।।

× × ×

ख्यातिं पुमानिति पुमान्भजते स एव
योऽलंकृतो गुणगणैः शिशिरांशुशुभ्रैः ।
सोऽश्मैव संप्रति मणिः प्रथिताकरोऽपि
यस्य स्फुरन्ति न करा दलितान्धकाराः ।।

× × ×

श्रुतिदीपतिरस्कृतान्धकारा
प्रतिभासम्पदमक्षतां वहन्ती ।
जयति व्यवहारहेतुरेका
मतिरेवार्थविनिर्णयं विधात्री ।।

× × ×

विवेकभाजो विरला हि लोके
व्यतीतसंख्या ननु सन्ति मूर्खाः ।

× × ×

औत्सुक्यं व्रजति न रम्यदर्शनात्कः ?

× × ×

प्रेमाहो क्वचिदपि नेक्षते व्यपायम्

[राजानकरत्नाकरस्य]

कार्योत्तप्ते मनसि लभते नावकाशं विलासः ।

× × ×

यत्सत्यं न त्रिभुवनमपि प्रीतये दुःखितानाम् ।

[धोयीकस्य]

# राजस्थान-संस्कृतसाहित्यसम्मेलनस्य द्वादशाधिवेशने वेदपरिषदोऽध्यक्षस्य युधिष्ठिर-मीमांसकस्याभिभाषणम्

वेदानां महत्त्व तत्प्रचारोपायाश्च

**बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधानाः ।**
**यदेषां श्रेष्ठं यदरिप्रमासीत् प्रेणा तदेषां निहितं गुहाविः ॥**

ऋ० १०।७१।१ ।।

मान्याः सुरभारतीसमाराधनपरा वेदवेदाङ्गादिविविधशास्त्रविज्ञानोपेतास्तत्र भवन्तो विद्वद्वर्याः !

विज्ञातं हि भवतां समेषामपि यद्वेदा अस्माकं वैदिकधर्मानुयायिनां प्राणभूता वर्तन्ते । आजन्मन आमरणान्तम् अस्माकं सर्वेऽपि संस्कारा आभ्युदयनैःश्रेयसिका व्यवहाराश्च वेदानेव प्राधान्येनोपजीवन्ति । सम्प्रत्यपि धर्मप्रधानानां वेदा एव प्रमाणभूताः सन्ति । अत एव आस्माकीनैर्ब्राह्मणैरद्यपर्यन्तं ते तथा महता प्रयत्नेन कण्ठस्थीकृत्य सुरक्षिताः, येन तेष्वेकत्रापि स्वरमात्रावर्णविपर्यासो नोपलभ्यते ।

सत्येव जायते विचारणा, यत् किमत्र कारणं येन वैदिकमतानुयायिनः प्राधान्येन वेदमेवाश्रयन्ति ? तत्रैतिहासिकदृष्ट्याऽनुशीलने कृते सति ज्ञायत एतद् यद् भगवन्तं ब्रह्माणमारभ्य आस्वामिदयानन्दं[1] ये केऽपि महर्षयो मुनय आचार्याश्च बभूवुस्ते सर्वेऽपि 'वेदाः सर्वविद्यानां भूतभव्यभविष्योपयोगिनां ज्ञानानामाकरग्रन्थाः' इति मेनिरे । वेदेषु यादृशं सूक्ष्मं प्रत्यक्षाविषयीभूतं ज्ञानं वर्तते,[2] न तादृक् क्वचिदन्यत्रोपलभ्यते । अत एव चाह भगवान् स्वायम्भुवो मनुः—

सेनापत्यं च राज्यं च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ।।
भूतं भव्यं भविष्यं च सर्वं वेदात् प्रसिध्यति ।।
बिभर्त्ति सर्वभूतानि वेदशास्त्रं सनातनम् ।
तस्मादेतत् परं मन्ये यज्जन्तोरस्य साधनम् ।।
पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् ।
अशक्यमप्रमेयं च वेदशास्त्रमिति स्थितिः ।। इति

मनुस्मृतौ १२।१००,९७,९९,४४ ।।

१. द्र० 'संस्कृतसाहित्यस्यारम्भ ऋग्वेदात् भवति, समाप्तिश्च स्वामिदयानन्दस्य ऋग्वेदादिभाष्यभूमिकातः' इति मैक्समूलरः (भारतवर्षः किं शिक्षयितुं समर्थः' इत्यस्य तृतीये भाषणे) ।

२. पदार्थविज्ञानविषये वेदेषु महती दक्षता वर्तते । द्र० स्वामिदयानन्दस्य वेदविषयकं पूनाव्याख्यानम् ( उपदेशमञ्जरी, पृ० ४५ ) ।

एतत् सर्वमभिसमोक्ष्यैव भगवता मनुनाऽन्यत्रापि महता कण्ठेनोक्तम्—

सर्वज्ञानमयो हि सः । (२।७) इति ।

अयमेव राद्धान्तस्तत्र भवता कृष्णद्वैपायनेनाऽपि प्रतिपादितः । तथा हि—

यानीहागमशास्त्राणि याश्च काश्चित् प्रवृत्तयः ।
तानि वेदं पुरस्कृत्य प्रवृत्तानि यथाक्रमम् ।। इति
महाभारते अनु० १२२।४ ।।

परं ब्रह्मिष्ठेन याज्ञवल्क्येनाऽप्युक्तम्—

न वेदशास्त्रादन्यत्तु किञ्चिच्छास्त्रं हि विद्यते ।
निःसृतं सर्वशास्त्रं तु वेदशास्त्रात् सनातनात् ।।इति

यद्येवं वेदा एव सर्वविधज्ञानस्य निधयस्तर्हि किमर्थं तत्तच्छास्त्राणां प्रवचनमकारि महर्षिवृन्दैरिति चेद् उच्यते—

यदा सर्गादावपरिमितशक्तिप्रभाप्रभाववीर्या धर्मसत्त्वशुद्धतेजसोऽपरिमितबुद्धयः साक्षात्कृतधर्माणो मनुष्या वभूवुस्ते वेदादेव सर्वविधं ज्ञानमाददते स्म । नासीत्तदानीं वेदातिरिक्तं किमप्यन्यच्छास्त्रम् । यदातूत्तरकालं मानवाः क्रमशोऽपचीयमानसत्त्वा उपचीयमानरजस्तमस्का[2] अल्पमतय उपदेशेनापि मन्त्रान्तर्गता विविधा विद्या विज्ञातुं चासमर्था बभूवुस्तदा तादृशान् अल्पमेधसो[3] मनुष्यान् विविधा विद्या ग्राहितुं तत्तच्छास्त्राणां प्रवचनमकार्षुर्महर्षयः । अयमेव शास्त्रावतारेतिहासस्तत्र भगवता यास्केनेत्थं प्रत्यपादि—

साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् संप्रादुः। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्[4]वेदं च वेदाङ्गानि च इति । निरुक्ते १।२० ।।

इममेव चेतिहासमनुसृत्य भगवता याज्ञवल्क्येनाऽप्युक्तम्—

दुर्बोधं तु भवेद् यस्माद् अध्येतुं नैव शक्यते ।
तस्मादुद्धृत्य सर्वं हि शास्त्रं तु ऋषिभिः कृतम् ।।इति

१. द्रष्टव्या मेधातिथिगोविन्दराजादिविरचिता मनुस्मृतेष्टीकाः ।

२. द्र० पाराशरीयज्योतिषसंहिताया वचनम्—'पुरा खलु अपरिमितशक्तिप्रभाप्रभाववीर्या······धर्मसत्त्वशुद्धतेजसः पुरुषा बभुवुः । तेषां क्रमाद् अपचीयमानसत्वानाम् उपचीयमानरजस्तमस्कानां······' ( एतच्च भट्टोत्पलेन वराहमिहिरकृतबृहत्संहिताटीकायां पञ्चदशे पृष्ठ उद्धृतम् ) । आयुर्वेदीयचरकसंहिताया विमानस्थाने तृतीयेऽध्याये—"आदिकाले······' इति च ।

३. द्रष्टव्या काशिका ५।४।१२२ ।।

४. समाम्नासिषुरित्यस्य रचितवन्त इत्यर्थः कैश्चिद् व्याख्यातृभिः क्रियते । स चाशुद्धः । परं प्राचीनेन निरुक्तवार्तिककृताऽयं निरुक्तांश एवं व्याख्यायते—

अशक्तास्तूपदेशेन ग्रहीतुमपरे तथा । वेदमभ्यस्तवन्तस्ते वेदाङ्गानि च यत्नतः ।। इति । अयं निरुक्तवार्तिकश्लोको मण्डनमिश्रकृतस्फोटसिद्धेर्गोपालिकाटीकायामुद्धृतो वर्तते । स्वामिदयानन्देन स्वीयऋग्वेदभाष्यभूमिकायामुक्तनिरुक्तांशव्याख्याने समाम्नासिषुरित्यस्य 'अभ्यासं कारितवन्तः इत्यन्तर्भूतण्यर्थः कृतः ।

महाभारतेऽपि भगवता वेदव्यासेन लिखितम्--

वेदात् षडङ्गान्युद्धृत्य' (महा०शान्ति० २८४।९२) इति।

अपि च, इदानीं शिक्षा-कल्प-व्याकरण-निरुक्त-छन्दोज्योतिष-धर्मशास्त्र-पदार्थ-विज्ञान-साहित्य-कला-शिल्प-राजनीति-आयुर्वेद-धनुर्वेद-गन्धर्ववेद-वास्तुशास्त्रादीनां ये ये आकरभूता ग्रन्था उपलभ्यन्ते, ते सर्वेऽपि स्वस्वविषयस्य वेदमूलकतां महताकण्ठेनोद्घोषयन्ति। विस्तरभिया कानिचिदेव प्रमाणानि प्रस्तूयन्ते—

(१) ज्योतिषाचार्य आर्यभट्टः स्वग्रन्थान्त ज्योतिश्शास्त्रस्य वेदमूलकतां संगिरते।

(२) आयुर्वेदशास्त्रम् अथर्ववेदस्योपाङ्गमिति भगवान् सुश्रुतो ब्रवीति—

इह खल्वायुर्वेदो नाम यदुपाङ्गमथर्ववेदस्य।

सूत्र० अ० १।

(३) पदार्थविज्ञानप्रतिपादकं वैशेषिकशास्त्रमपि वेदमूलकमिति भगवान् कणादः प्रतिजानीते। तथा ह्याह—

तद्वचनादाम्नायस्य प्रामाण्यम्। वैशेषिके १।१।३॥

अस्यायमर्थः—तद्वचनाद् 'अथातो धर्मं व्याख्यास्यामः' इत्येवं प्रतिज्ञातस्य वैशेषिकप्रतिपाद्यस्य पदार्थधर्मस्य वचनात्[२] प्रतिपादनाद् आम्नायस्य प्रामाण्यं भवति।

अत्रेदमपि ज्ञेयं यद् भगवान् कणादो न केवलं 'वेदाः पदार्थधर्मप्रतिपादकाः' इति प्रतिज्ञामेव कृतवान्, अपितु तत्तत्प्रकरणे तत्तत्पदार्थधर्मप्रतिपादनाय श्रुतिप्रामाण्यमप्युदाहृतवान्। तद्यथा—

(क) हिमकरकादीनामुत्पत्तिः तेजःसंयोगाद् भवतीति प्रतिपाद्य दिव्यास्वप्सु तेजःसंयोगो भवतीति प्रतिपादयन् वैदिकं च(५।२।१०) इति सूत्रेण वैदिकवचनमपि प्रमाणयति। यथा—

या अग्निं गर्भं दधिरे विश्वरूपा
ता न आपः शं स्योना भवन्तु।
तै० सं० ५।६।१॥

आपो ह यद् बृहतीर्विश्वमायन्
गर्भं दधाना जनयन्तीरग्निम्।
ऋ० १०।१२१।७॥

वृषाग्निं वृषणं भरन्नपां गर्भं समुद्रियम्।
यजु० १५।४६॥

योऽनिध्मो दीदयद् अप्स्वन्तः। ऋ० १०।३०।४॥

इत्येवमादीनि[३] बहूनि वचनानि वेदेषूपलभ्यन्ते।

(ख) शरीरं द्विविधं योनिजमयोनिजं चेति ववृण्वन् अतीन्द्रियमयोनिजं शरीरं प्रतिपादयन् 'वेदलिङ्गाच्च' (४।२।११) इति सूत्रेणायोनिजशरीरप्रामाण्याय वैदिकं लिङ्गमुपस्थापयति। तच्च—

ब्राह्मणोऽस्य मुखमासीद् बाहूराजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत।
ऋ० १०।९०।१२॥

---

१ अयं षडङ्गोद्धारो भगवता शिवेन कृतः। बृहस्पतिनाऽपि षडङ्गप्रवचनमकारि--'वेदाङ्गानि तु बृहस्पतिः।' महाभारतं (दा० सं०) शान्ति० ११२।३२॥

२ सम्प्रत्युपलभ्यमानेषु व्याख्यानेषु 'तत्' पदेन ईश्वरः' 'गृह्यते' तच्चिन्त्यम्, सर्वनाम्नां पूर्वपरामर्शित्वात्।

३. उपस्कारव्याख्यानेऽन्यानि वचनान्युद्धृतानि, तान्यप्यत्र द्रष्टव्यानि।

इत्येवमादि[1] द्रष्टव्यम् ।

अस्मिन्मन्त्रे 'अस्य' पदेन विराण्नामकः पुरुषः परामृश्यते । स एव पुरुषः वैदिकग्रंथेषु प्रजापति-हिरण्यगर्भ-सुवर्णाण्ड-महदण्डादिभिः शब्दान्तरैः स्मर्यते ।

४—भगवान् न्यायसूत्रकारो गौतमोऽपि अतीन्द्रियकं विज्ञानं प्रतिपादयतो वेदभागस्य प्रामाण्यनिदर्शनायाह—

मन्त्रायुर्वेदप्रामाण्याच्च तत्प्रामाण्यमाप्तप्रामाण्यात् । २।१।६८।।

मन्त्रेषु य आयुर्वेदः[2] प्रत्यक्षविषयीभूत उपदिश्यते, तस्याavितथं प्रामाण्यं लोकविज्ञातम् । तस्य प्रामाण्यादतीन्द्रियविज्ञानप्रतिपादकस्यापि वेदभागस्य प्रामाण्यम्, यतः य एव आप्त ईश्वरः । प्रत्यक्षविषयीभूतस्यायुर्वेदविषयकस्य वेदभागस्य कर्ता, स एवातीन्द्रियविषयकस्यापि वेदभागस्य रचयिता । तस्मादेककर्तृकत्वाद् अतीन्द्रियविषयकस्यापि वेदभागस्य प्रामाण्यं स्वकर्तव्यं भवति ।

सत्येवं, सर्वविद्यानामाकरभूतान् वेदान् यदि वैदिकधर्मानुयायिनः प्राणादपि प्रियान् संजानते तर्हि किमत्राश्चर्यम् ।

सम्प्रति वेदार्थविषयमवलम्ब्य किञ्चिदुच्यते । बहोः कालात् वेदप्रतिपाद्यविषयं इत्यत्राह सायणाचार्य :—

तस्मिंश्च वेदे द्वौ काण्डौ, कर्मकाण्डो ब्रह्मकाण्डश्च । बृहदारण्याख्यो ग्रन्थो ब्रह्मकाण्डस्तद्व्यतिरिक्तं शतपथब्राह्मणं संहिता चेत्यनयोर्ग्रन्थयोः कर्मकाण्डत्वम्, तत्रोभयत्राधानाग्निहोत्रदर्शपौर्णमासादिकर्मण एव प्रतिपाद्यत्वात् इति । काण्वसंहिताभाष्योपोद्घाते ।

इत्थमेवान्यवेदानां विषयोऽपि ज्ञेयम् ।

वेदांगज्योतिषेऽप्युक्तम्—वेदा यज्ञार्थं प्रवृत्ता इति ।

एतेन स्पष्टमेव यन्मन्त्रसंहितासु केवलं कर्मकाण्ड एव प्रतिपाद्यत इति ।

अस्तु. यदि हि नाम वेदानां प्रयोजनं द्रव्ययज्ञसम्पादनमेव, हन्त ! समाप्तमेव वेदानां सर्वविद्यामूलकत्वं प्राचीनैर्महर्षिवर्यैरुद्घोषितं मतम् । तस्मात् पुरस्तान्निर्दिष्टैः प्रमाणैः प्रतिपादितस्य प्राचीनाचार्यसमुपबृंहितस्य 'वेदाः सर्वविद्यानामाकरग्रन्थाः' इति मतस्य रक्षायै वेदानामनेकार्थप्रतिपादनशक्तिरवश्यमुररीकर्तव्या । तथा सत्येव वेदानां वास्तविकं महत्त्वमुपपादयितुं शक्यं, नान्यथा ।

सा च मन्त्राणामनेकार्थता न स्वच्छन्दा, अपितु व्यवस्थिता वर्तते । सा च व्यवस्था प्राचीनैर्महर्षिभिः त्रिविधप्रक्रियानुरूपा व्यवस्थापिता । तदनुसारं मन्त्राणां याज्ञिक एकोऽर्थः, आधिदैविको द्वितीयः, आध्यात्मिकस्तृतीयः ।

प्राचीना महर्षयो वैदिका विद्वांसश्च वेदस्य पुरस्तान्निर्दिष्टं त्रिविधमर्थं स्वीकुर्वन्ति स्म इत्यत्र कानिचित् प्रमाणानि प्रस्तूयन्ते—

१. वैशेषिकोपस्कारे एतद्व्याख्याभूतं किंचिल्लुप्तब्राह्मणमप्युद्ध्रियते ।

२. अस्य सूत्रस्य व्याख्यातारो मन्त्रायुर्वेदयोर्द्वन्द्वसमास इति मन्यते ।

(१) भगवान् यास्कः 'वाचं शुश्रुवां अफलामपुष्पाम्' ( ऋ० १०।७१।५ ) इत्यृगंशं व्याख्यायमान आह—

अर्थं वाचः पुष्पफलमाह—याज्ञदैवते पुष्पफले देवताध्यात्मे वा इति। निरुक्ते १।१६ ॥

एतेन दैव्या वाच्यो वेदस्य याज्ञिकाधिदैविकाध्यात्मिकास्त्रिविधा अर्था भवन्तीति विस्पष्टमुच्यते।

(२) न च भगवान् यास्कः केवलं प्रतिज्ञामेव कृतवान्, अपितु निरुक्ते व्याख्यायमानानां सर्वेषामपि मन्त्राणाम् आधिदैविकव्याख्यानं कुर्वन् सर्वमन्त्राणामाधिदैविकार्थ एव प्रधानभूत इति ज्ञापयति। अनेकत्र च स आध्यात्मिकार्थं याज्ञिकार्थं च निदर्शयति। तद्यथा—

(क) 'एकया प्रतिधा पिबत् साकं सरांसि काणुकः' ( ऋ ८। ७७। ४ ) इत्यृचं व्याख्यायमान आह—

तत्रैतद् याज्ञिका वेदयन्ते त्रिंशदुक्थपात्राणि माध्यन्दिने सवने एकदेवतानि। तान्येतस्मिन् काले एकेन प्रतिधानेन पिबन्ति। तान्यत्र सरांस्युच्यन्ते। त्रिंशदपरपक्षस्याहोरात्राः, त्रिंशत्पूर्वपक्षस्येति नैरुक्ताः। तद् या एताश्चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति इति। निरुक्ते ५।११॥

(ख) 'गौरमीमेदनु' ( ऋ० १।१६४।२८ ) इति 'उपह्वये सुदुघां धेनुमेताम्' (ऋ० १।१६४।२६) इति च ऋचोर्व्याख्याने निरुक्तकार आह—

वागेषा ( गौः, धेनुः ) माध्यमिका, घर्मधुगिति याज्ञिकाः। निरुक्ते ११।४२,४२ ॥

(ग) 'यत्रा सुपर्णाः' ( ऋ० १।१६४।२१ ) इति मन्त्रव्याख्याने यास्क आह—

यत्र सुपर्णाः सुपतना आदित्यरश्मयः······इत्यधिदैवतम्। अथाध्यात्मम्—यत्र सुपर्णाः सुपतनानीन्द्रियाणि···इत्यात्मगतिमाचष्टे इति।

निरुक्ते ३।१२ ॥

(घ) 'सप्त ऋषयः प्रतिहिताः शरीरे' ( यजु० ३४।५५ ) इति मन्त्रव्याख्यान आह—

'सप्त ऋषयः प्रतिहिताः शरीरे, रश्मय आदित्ये ······इत्यधिदैवतम्। अथाध्यात्मम्—सप्त ऋषयः प्रतिहिता शरीरे, षडिन्द्रियाणि विद्या सप्तम्यात्मनि ······इत्यात्मगतिमाचष्टे इति। निरुक्ते १२।३७ ॥

एवमेवान्यत्रापि अधिदैवतेन सह याज्ञिकमाध्यात्मिकं च व्याख्यानं भगवता यास्केन प्रदर्शितम्। निरुक्तस्य त्रयोदशचतुर्दशाध्याययोस्तु प्रायेण सर्वमन्त्राणामेवाधिदैविकमाध्यात्मिकं च व्याख्यानमुपलभ्यते। तेन यास्कमते मन्त्राणां त्रिविधोऽर्थः प्रामाणिक इति सर्वथा विस्पष्टं भवति।

(३) पूर्वनिर्दिष्टमेव यास्कीयं मतं निरुक्तटीकाकारः स्कन्दस्वामी ( महेश्वरः ) महता प्रपञ्चेन प्रतिपाद्योपसंहरति—

सर्वदर्शनेषु (पूर्वनिर्दिष्टेषु याज्ञिकाधिदैवताध्यात्मिकेषु ) च सर्वे मन्त्रा योजनीयाः कुतः स्वयमेव भाष्यकारेण सर्वमन्त्राणां त्रिप्रकारस्य विषयस्य प्रदर्शनाय 'अर्थं वाचः पुष्पफलमाह इति यज्ञादीनां पुष्पफलत्वेन प्रतिज्ञानात्। निरुक्तटीकायां ७।५ ॥

(४) निरुक्तव्याख्याता दुर्गाचार्योऽपि मन्त्राणां त्रिप्रकारोऽर्थ इति विस्पष्टयति तद्यथा—

(क) आध्यात्मिकाधिदैवताधियज्ञाभिधायिनां मन्त्राणामर्थाः परिज्ञायन्ते इति। निरुक्तटीकायाम् १।१८॥

(ख) तत्र तत्र एक एव ह्यसौ आदित्यमण्डले चाधिदैवते चाध्यात्मे च बुद्ध्यधिदेवताभूतः, स एव तत्र तत्रोपेक्षितव्यः।......अध्यात्मेऽपि हृदयाकाशाद् यानीन्द्रियाणि प्रसर्पन्ति, त एव रश्मयः, अधिदैवते च स एव विश्वेदेवा इत्युक्तम्। एवं तत्रतत्र योज्यम्। प्रकारमात्रमेवेदमुपप्रदर्शितं भाष्यकारेणेति। निरुक्तटीकायाम् ३।१२॥

(ग) तस्मादेतेषु यावन्तोऽर्था उपपद्येरन् आधिदैविकाध्यात्माधियज्ञाश्रयाः सर्व एव ते योज्याः, नात्रापराधोऽस्ति इति। निरुक्तटीकायाम् २।८॥

एवमन्यत्रापि तत्र तत्र मन्त्राणां त्रिविधार्थ-प्रक्रियामाचष्टे दुर्गाचार्यः।

(५) वेदविदामलङ्कारभूतः प्रमाणितशब्दशास्त्र[1] आचार्यो भर्तृहरिरपि मन्त्राणां त्रिविधप्रक्रियागाम्यर्थ इति स्वीकरोति। तथा ह्याह—

यथा 'इदं विष्णुर्विचक्रमे' इत्यत्र एक एव विष्णुशब्दोऽनेकशक्तिः सन् अधिदैवतमध्यात्मम-धियज्ञं चात्मनि नारायणे चषाले च तया शक्त्या प्रवर्तत इति। महाभाष्यदीपिकायां हं०जे० पृ० २६८।

एवमन्येषामपि प्राचामाचार्याणां वचनान्युद्धर्तुं शक्यन्ते, परन्तु विस्तरभिया विरम्यते।

केषांचिन्मन्त्राणां बहुविधोऽप्यर्थः पूर्वाचार्यैः प्रदर्शितः। यथा—

'चत्वारि वाक्परिमिता पदानि' (ऋ० १।१६४। ४५) इत्यृचो यास्केन षड्विधोऽर्थः प्रदर्शितः। तथाहि—

कतमानि तानि चत्वारि पदानि? ओङ्कारो महाव्याहृतयश्चेत्यार्षम्, नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः, मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिकाः, ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः, सर्पाणां वाग् वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके, पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादाः। नि० १३।९॥

एतदेव च सर्वमभिसमीक्ष्य निरुक्तव्याख्याकारो दुर्गाचार्य आह—

(क) अनुपक्षीयमाणशक्तयो हि वेदशब्दा यथा-प्रज्ञं पुरुषाणामर्थाभिधानेषु विपरिणममानाः सर्वतोमुखा अनेकार्थान् प्रब्रुवन्तीति। निरुक्त-टीकायाम् २।८॥

एभिः पूर्वतनैः प्रमाणैः सर्वथा विस्पष्टं भवति, यद् वेदा न केवलं द्रव्यमययज्ञार्थमेव प्रवृत्ता इति। ते हि सर्वविद्यानां सर्वविधविज्ञानानां चाकरभूताः सन्ति। तत्राधिदैविकोऽर्थः साक्षाद्विज्ञानपर एव, स

१. द्रष्टव्यः—वर्धमानकृतगणरत्नमहोदधिः, पृष्ठ १२३।

च बहुविधः। तन्निदर्शनमुपरिष्टात् संक्षेपतः करिष्यते। आध्यात्मिकोऽप्यर्थः आत्म-शरीर-परमात्मसंबन्धेन त्रिधा विभक्तः।

परिशिष्टो याज्ञिकार्थोऽप्यत्यन्तं महत्त्वभूतो वर्तते। परन्तु यथा साम्प्रतिका याज्ञिका यज्ञव्याख्यानं कुर्वन्ति, न तथा तेषां तर्कप्रधानेऽस्मिन् युगे महत्त्वं प्रतिपादयितुं शक्यते। वस्तुतोऽत्र कारणं यज्ञप्रक्रियामूलापरिज्ञानमेवास्ति। तस्मादत्र लेशतो नित्यत्वेन विहितानां श्रौतयज्ञानां वास्तविकं प्रयोजनमुपवर्ण्यते।

वैदिकवाङ्मयस्यानेकधा परिशीलनेन मयैतत् समधिगतं यन्नित्यत्वेन विहिता आधानादारभ्या-सहस्रसंवत्सरसाध्यपर्यन्ताः श्रौतयज्ञा अस्मिन् ब्रह्माण्ड आसर्गाद् आप्रलयान्तं यावन्तोऽतीन्द्रिया यज्ञा निष्पन्नाः प्रवर्तन्ते च तेषां स्वरूपं परिज्ञापनाय प्रवृत्ताः। अस्मिन् विराट्पुरुषे (ब्रह्माण्डे) दैवैः (प्राकृतिकतत्त्वैः) ये यज्ञा वितन्यन्ते, तानेवाधिकृत्य पुरुषसूक्तस्येयमृक् प्रवृत्ता—

यज्ञेन यज्ञमयजन्त देवा-
स्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त
यत्र पूर्वे साध्याः सन्ति देवाः॥
ऋ० १०।९०।१६॥

यास्केव आधिदैविकयज्ञप्रतिपादिकेयम् ऋगेवं व्याख्याता—

यज्ञेन यज्ञमयजन्त देवा अग्निनाऽग्निमयजन्त देवाः। अग्निः पशुरासीत् तमालभन्त तेनायजन्त इति च ब्राह्मणम्। तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः संसेव्यन्त। यत्र पूर्वे साध्याः सन्ति देवाः साधनाः। द्युस्थानो देवगण इति नैरुक्ताः इति। निरुक्ते १२।४१॥

यथासम्प्रति भूगोलखगोलयोः परिज्ञानाय तयोर्विविधप्रकारकाणि चित्राणि निर्मीयन्ते तथैव ब्रह्माण्डविज्ञानं सम्पादयितुं विविधानां श्रौतयज्ञानां विधानं प्रवृत्तम्। अतः श्रौतयज्ञविधानं सम्यक् परिज्ञाय तत्तत्प्रकृतिभूतं ब्रह्माण्डविज्ञानं सम्यक् सम्पादयितुं शक्यते।

अस्यैव परमोपयोगिनः श्रौतयज्ञतत्त्वस्य स्पष्टतायै याज्ञिकीमाधानप्रक्रियामुपस्थाप्य वैदिकग्रन्थोद्धरणैरेव तद्व्याख्या विधास्यते।

अग्न्याधानाय प्रथमतो वेदिर्निर्मीयते। वेदिनिर्माणे चेयं प्रक्रिया[1]—यज्ञोपयोगिस्थानं निश्चित्य तत्पृष्ठं किंचित् खनित्वा तत्र प्रथमं जलप्रसेकः क्रियते, तदनन्तरं क्रमशो वराहविहता मृत्, वल्मीक वपा, ऊषः, सिकताः, शर्कराः विकीर्य, इष्टकाः संचीय, हिरण्यं निधाय, समिधः संस्थाप्य अरणी मथित्वाऽग्निमुत्पाद्य तत्र अग्नेराधानं क्रियते।

१. इयं प्रक्रिया अग्न्याधानाग्निचयनयोः समासेन निर्दिष्टा।

इयमग्न्याधानप्रक्रिया महदण्डतो यदेयं भूमिः स्वसत्तामलभत[1] तस्मात्कालादारभ्य यावत् पृथिव्याः पृष्ठेऽग्नेः प्रादुर्भावः समजनि तावति काले सा भूमिरुत्तरोत्तरं विपरिणममाना कां कामवस्थामतिक्रम्य प्रथमतो स्वपृष्ठेऽग्निसद्भावे समर्थाभूदिति संक्षेपतः प्रदर्श्यते ।

सलिलमय्यां भूमौ क्रमशो नव सृष्टयोऽभवन् । तथाहि ब्राह्मणं भवति—

स श्रान्तस्तेपानः फेनमसृजत ।...स श्रान्तस्तेपानो मृदं शुष्कापं ऊषं सिकतं शर्कराम् अश्मानम् अयोहिरण्यम् औषधिवनस्पत्य् असृजत । तेनेमां पृथिवीं प्राच्छादत् ।। शत० ६।१।१।१३।।

या अत्राप्सु नव सृष्टयः परिगणिताः तासु फेनरूपा सृष्टिराधाने नोपयुक्ता दृश्यतेऽतस्तां परिहाप्य अन्यासाम् आधानप्रक्रियानुसारं वर्णनं प्रस्तूयते–

१—यदेयं भूमिर्महदण्डतो पृथग्भूत्वा स्वसत्तामलभत तदा सा सलिलरूपासीत् अत एव—

आपो ह वा इदमग्रे सलिलमेवास (श० ११।१।६।१) इत्येषा श्रुतिः प्रवृत्ता । भूमेस्तामवस्थां द्योतयितुं वेदिस्थाने प्रथमं जलप्रसेकः क्रियते ।

२—अग्निसंयोगात् सलिलेषु फेनोऽजायत, स एव मारुतसंयोगाद् घनत्वं[2] प्राप्य मृद्भावं गतः । तदानीं पृथिवी स्वल्पासीत् । । अत एवोक्तम्—

स (फेनः) यदोपहन्यते मृदेव भवति (श. ६।१।३।३) इति, यावद्वै वराहस्य चषालं तावतीयमग्र आसीत्, यद्वराहविहतमुपास्याग्निमाधत्ते (मै. सं० १।६।३) इति च श्रुतिविहितामवस्थां द्योतयितुं जलप्रसेकानन्तरं वराहविहता मृत् प्रकीर्यते ।

३—तदनन्तरं सूर्यतेजसा पृष्ठोपरिभागस्था यदा मृद आपो शुष्कतां गतास्तदा शुष्कापोरूपा सृष्टिरजायत । अस्यामवस्थायां पृष्ठभागस्था मृत् शुष्का बभूव, अधस्ताच्च तस्या जलमासीत् । तामवस्थां द्योतयितुम्—

यद्वल्मीकवपामुत्कीर्याग्निमाधत्ते (मै. सं. १।६।३) इति श्रुतिः प्रवृत्ता ।

वल्मीकवपाया अधस्ताज्जलं भवति । एष च निश्चितः प्रसिद्धान्तः । अतएव धन्वदेशे जलगवेषका वल्मीकवपास्थान एव कूपखननं प्रायेणोपदिशन्ति ।

४—ततः सूर्यतेजसा सैव शुष्कापो मृद् ऊषत्वम् (क्षारत्वम्) अभजत, सा ऊषरूपा सृष्टिरभवत् । अतएव—

यदूषानुपकीर्याग्निमाधत्ते (मै० सं० १।६।३) इति श्रुतिः प्रवृत्ता ।

५—तत्पश्चात् सैव मृत् सूर्यतेजसा तप्यमाना सिकतात्वमलभत[3] । अतएव—

यत्सिकतामुपकीर्याग्निमाधत्ते (मै० सं० १।६।३)

१. पाश्चात्या वैज्ञानिका 'भूमेरुत्पत्तिः सूर्यादभवत्, अत आदावियं सूर्यवद् उष्णासीत्, शनैः शनैः शीतीभावं गता'इति ब्रुवन्ति । तद्वैदिकविज्ञानविरोधाच्चिन्त्यम् ।

२. सोऽग्निमारुतसंयोगाद् घनत्वमुपद्यते । महा० शान्ति १८२।१५।। यथा तप्ते दुग्धे यद्याच्छादनं क्रियते तर्हि वायुसंयोगाभावात्तदुपरि संतानिका न जायते ।

३. द्र० एष वा अग्निर्वैश्वानरो यदसा आदित्यः, स यद् इहासीत् तस्यैतद् भस्म यत् सिकताः । मै० सं० १।६।३।।

इति श्रुतिः प्रवृत्ता।

६—तदनन्तरं ता एव सिकताः सूर्यतेजसाऽन्तरूष्मणा च शर्करात्वमविन्दन्त। स शर्करारूपा सृष्टिरजायत अत एव—

यच्छर्करा उपकीर्याग्निमाधते (मै० सं० १।६।३)

इति श्रुतिः प्रवृत्ता।

शर्करोत्पत्त्या पृथिव्यां यद् वैशिष्ट्यमजायत तदपि वैदिकग्रन्थेष्वित्थं प्रदर्श्यते—

शिथिरा वा इयं (पृथिवी) अग्र आसीत् तां प्रजापतिः शर्कराभिरदृंहत (मै० सं० १।६।३) इति॥

एतदेव पृथिवीदृंहणं येन द्यौरुग्रा पृथिवी च दृढा (ऋ० १०।१२१।५) इति मन्त्र उपश्यते।

७—ततः पश्चात् ता एव शर्करा अन्तरूष्मणा तप्यमाना अश्मत्वं गताः[१]। सा अश्मसृष्टिर्बभूव। अतएव चयने—

इष्टका उपदधाति (तै० सं० ५।२।८) इत्येषा श्रुतिः प्रवृत्ता। नियतकारायां वेद्यां सुगमतायै नियतकारा इष्टका उपधीयन्ते। अश्मनां नियताकारे विपरिणामो विशेषत आयाससाध्य इति कृत्वा तत्स्थाने इष्टकाः प्रतिनिधीयन्ते।

८—ततस्त एवाश्मानोऽन्तरूष्मणा पच्यमाना लोहादारभ्यासुवर्णं धातून् उत्पादितवन्तः[२]। साऽयोहिरण्यरूपा सृष्टिरभवत्। अत एव—

हिरण्यं निधाय चेतव्यम्[३] इति चयनविषयिका श्रुतिः प्रवृत्ता।

९—एवं पृथिव्याः पूर्णत्वेऽपि सा कूर्मपृष्ठवद् अलोमिकैव आसीत्। तत ओषधिवनस्पतयोऽजायन्त एतदेव द्योतयितुम्—

इयं वा अलोमिकेवाग्र आसीत् (ऐ० ब्रा० २४।२२) इति, ओषधिवनस्पतयो वै लोमानि (जै० ब्रा० २।५४) इति च श्रुतिः प्रवृत्ता एतामेवावस्थां द्योतयितुं लोमस्थानीया समिधस्तत्र स्थाप्यन्ते।

एवं नवम्याम् ओषधिवनस्पतिरूपायां सृष्टौ प्रादुर्भूतायां वनस्पतीनां शाखानां वायुवेगेन संघर्षे सत्यग्नेः प्रथमतः प्रादुर्भावो पृथिव्या उपरि बभूव। यतः प्रथमतोऽग्नेः प्रादुर्भावो वृक्षशाखानां संघर्षणेनैवाभवत्, अत एवाधानेऽपि अरणिमन्थनेनैवाग्निमुत्पापादन्ति, नान्येव प्रकारेण।

एतेनाऽग्न्याधानप्रक्रियाविवरणेन विस्पष्टं भवति यदिमे श्रौतयागाः प्राकृतयागानामेव प्रतिनिधित्वं कुर्वन्ति।

इत्थमेव सायंप्रातः क्रियमाणोऽग्निहोत्रहोमो रात्रिदिवसयोः, दर्शपौर्णमासौ कृष्णशुक्लपक्षयोः, चातुर्मास्ययागस्तिसृणामृतूनाम्, गवामयनं दक्षिणायनोत्तरायणयोः, ज्योतिष्टोमः संवत्सरस्य, सहस्रसंवत्सरसाध्यो यज्ञः सहस्रचतुर्युगपरिमितस्य सृष्टिकालस्य प्रतिनिधित्वं करोति। एवं एभिः श्रौतयज्ञैः सूक्ष्मा अतीन्द्रियाः प्राकृता यज्ञाः क्रिया घटना वा चित्रमिव मूर्तरूपेण परस्तादुपस्थाप्यन्ते बोध्यन्ते वा। एतेन श्रौतयज्ञानामत्याश्चर्यकरं

---

१. शर्करायाः अश्मानम्, तस्मात् शर्कराश्मैव भवति। शत० ६।१।१।३॥

२. अश्मानो लोहमुत्थितम्। महा० उद्योगपर्व। रसजं चैव लोहसंकरजं तथा। त्रिविधं जायते हेम चतुर्थम् नोपलभ्यते। रसार्णव तन्त्र ७।६६॥

३. मीमांसाशाबरभाष्य [२।२।१८] उद्धृता। अयमेवार्थः 'रुक्ममुपधाति' (मै० सं० ३।२।६) इत्यस्याः श्रुतेः।

परमोपयोगि प्रयोजनं व्याख्यातं भवति ।

यदा श्रौतयज्ञानां सृष्टिविज्ञानमेव पृष्ठभूमिस्तदा यज्ञिकप्रक्रियया क्रियमाणोऽप्यर्थोऽन्ततो सृष्टिविज्ञानप्रतिपादक[३] एव । तस्माद् वेदानां विज्ञानमेव मुख्योऽर्थः । यत्पिण्डे तद् ब्रह्माण्डे इति वचनानुसारं सृष्टिविज्ञानस्यापि अध्यात्मे परिणामः । अत एव श्रुतिः प्रवृत्ता—

यस्तन्न वेद किमृचा करिष्यति (ऋ. १।१६४।३९) इति ।

सर्वे वेदा यत्पदमामनन्ति (कठोप. २।१५) इति च ।

वेदैश्च सर्वैरहमेव वेद्यः (गीतायां १५।१५) इति च स्मृतिः ।

इदानीमवशिष्यते वेदार्थस्यैका प्रक्रिया, यस्या व्यावहारिकीति नाम । तस्या अपि वेदार्थे प्रामाण्यं स्वीक्रियते वेदज्ञैः । भगवता मनुना सेनापत्यं च राज्यं चेत्येवमादिभिः पूर्वोपस्थापितैः श्लोकैः राजनीतिप्रवर्तनं वर्णाश्रमधर्माणां भूतभव्यभविष्योपयोगिनां विधानानां प्रकल्पनं च वेदेभ्य एव सम्भवतीत्युक्तम् । न साक्षात् तादृशार्थपराः केचन मन्त्रा वेदेषूपलभ्यन्ते । एतादृशां कर्मणां विधानं वेदानां व्यावहारिकार्थमनुसृत्यै सम्भवति । स च व्यावहारिकार्थः क्वचित् साक्षात् प्रयुक्तया उपमया क्वचिदन्यैरलंकारैर्द्योत्यते । तद्यथा—

जायेव पत्य उशती सुवासाः (ऋ० १०।७१।४) इति ।

विधवेव देवरम् (ऋ० १०।४०।२) इति च ।

अत्र प्रथमया जायया ऋतुकालेषु सुवासांसि धार्याणीति द्योत्यते । अपरया पत्यौ मृते विधवाया देवरेण नियोगो विवाहो वा सम्भवतीति प्रदर्श्यते ।

ऋग्वेदस्य प्रथममण्डलस्थयोरुषःसूक्तयोर्वाचकलुप्तालंकारेण उषर्वत् स्त्रियः कैः कैः शुभैर्गुणैर्युक्ताः स्युरिति वर्ण्यते । स्वामिदयानन्दकृतऋग्भाष्यादत्र किञ्चिदुदाह्रियते—

उषर्वद्धितसम्पादिके । ऋग्भाष्ये १।४८।१२ ।।

प्रभातवद् बहुगुणयुक्ते । ऋग्भाष्ये १।४८।११ ।।

उषर्वत्कल्याणनिमित्ते । ऋग्भाष्ये १।४९।१ ।।

उषर्वत् पुरुषार्थनिमित्ते । ऋग्भाष्ये १।४९।१ ।।

एतादृश एवाभिप्रायः पारभाषिकेन 'दर्शन'-शब्देन निर्दिश्यते । तथाहि शाबरभाष्ये (१।३।२)—

(क) गुरुरनुगन्तव्य इत्यस्मिन् विषये—तथा च दर्शयति 'तस्माच्छ्रेयाँसं पूर्वं यन्तं पापीयान् पश्चादन्वेति' (मै० सं० ३।१।३) इति ।

(ख) प्रपा प्रवर्तयितव्या, तडागं च खनितव्यम् इत्यस्मिन् विषये—तथा च दर्शनं 'धन्वन्निव प्रपा असि' (तै० सं० २।५।१२) इति । तथा 'स्थलयोदकं परिगृह्णन्ति' (तै० सं० १।६।११) इति च ।

(ग) शिखाकर्म कर्तव्यम् इत्यस्मिन् विषये—दर्शनं च 'यत्र बाणा सम्पतन्ति कुमारा विशिखा इव' (ऋ० ६।७५।१७) इति ।

अत्रोदाहृतानां सर्ववचनानां वास्तविकोऽर्थस्तु तत्तत्प्रकरणानुसारं भिन्न एव । परन्तु तैरेव लौकिककर्मणामपि विधानं शबरस्वामिना प्रदर्शितम् ।

एवमन्यत्रापि विविधैरलंकारैर्वेदानां व्यावहारिकोऽर्थः कर्तुम् शक्यते ।

३. दैत्वाते हि याज्ञमन्तर्भूतमेव तदर्थत्वात्, अतो न पृथगुच्यते । दुर्गाचार्यः, निरुक्तटीकायां १।२०।।

वेदानां याज्ञिकाधिदैविकाध्यात्मिकास्त्वर्थाः परं सूक्ष्माः, न तत्र सर्वेषां बुद्धेः प्रवेशस्य सम्भवः। परन्तु वेदानां व्यावहारिकेण अर्थेन साधारणजना अपि वैदिकशिक्षानुकूलं स्वजीवनं श्रेष्ठं सुखिनं च सम्पादयितुं समर्था इति विज्ञाय स्वामिदयानन्देन प्राचीनैर्मन्वादिमहर्षिभिरादृतं पन्थानमाश्रित्य मन्त्राणां व्यावहारिकोऽर्थः प्राधान्येन प्रदर्शितः। तदुक्तं स्वीयर्ग्वेदादिभाष्यभूमिकायां प्रतिज्ञाविषये—

अथाऽत्र यस्य यस्य मन्त्रस्य पारमार्थिकव्यावहारिकयोर्द्वयोरर्थयोः श्लेषालंकारादिना सप्रमाणः सम्भवोऽस्ति तस्य द्वौ द्वावर्थौ विधास्येते।···यत्र खलु व्यावहारिकोऽर्थो भवति···। ऋभाभू० पृष्ठ ३६२।

याज्ञिकाधिदैविकाध्यात्मिका अर्थास्तत्र तत्र प्राचीनैर्महर्षिवर्यैः स्वस्वग्रन्थेषु प्रदर्शिताः, अतस्तादृशा अर्था न स्वामिदयानन्देन साक्षात् व्याख्याताः। एतदपि तत्रैवोक्तम्।

परन्त्वेतैर्वेदमन्त्रैः कर्मकाण्डविनियोजितैर्यत्रयत्राऽग्निहोत्राद्यश्वमेधान्ते यद्यत् कर्तव्यं तत्तदत्र विस्तरशो न वर्णयिष्यते। कुतः? कर्मकाण्डानुष्ठानस्यैतरेयशतपथब्राह्मणपूर्वमीमांसाश्रौतसूत्रादिषु यथार्थं विनियोजितत्वात्। पुनरेतत् कथनेनानृषिग्रन्थवत् पुनरुक्तपिष्टपेषणदोषापत्तेश्चेति।

ऋभाभू० पृ ३६२।

एवं वेदार्थविषये किञ्चिदुक्त्वा वेदेषु प्रतिपादितस्य अतीन्द्रियस्यातिसूक्ष्मस्य सृष्टिविज्ञानस्य प्रतिपादकाः केचन मन्त्रा उद्ध्रियन्ते—

महदण्डस्य=विराट् पुरुषस्योत्पत्तिः—परमपुरुषस्य सान्निध्यादीक्षणाद्वा प्रकृतिरुत्तरोत्तरं विपरिमाणा भूतोत्पत्त्यनन्तरम् अण्डभावं[1] प्राप्ता। मन्त्रेषु अयमण्ड एव गर्भशब्देन व्यपदिश्यते। अस्याण्डस्योत्पत्तिविषयका बहवो मन्त्रा वेदेषु समुपलभ्यन्ते। परन्त्विह एक एव उदाह्रियते—

तमिद् गर्भं प्रथमं दध्र आपो
यत्र देवाः समगच्छन्त विश्वे।
अजस्य नाभावध्येकमर्पितं
यस्मिन् विश्वा भुवनानि तस्थुः॥
ऋ० १०।८२।६॥

अस्मिन् मन्त्रे स्मृतोऽजो आदिदेव-प्रजापति-हिरण्यगर्भादिपदैः स्मृतो महदण्डरूपो महान् गर्भः। द्रष्टव्यमत्र वायुपुराणस्य पञ्चमाध्यास्य चत्वारिंशत्तमः श्लोकः।

अस्याण्डस्योत्पत्तिर् अप्सु अग्निप्रवेशेन भवति। तथा च मन्त्रवर्णो भवति—

अग्निं या गर्भं दधिरे विश्वरूपास्ता न आपः शं स्योना भवन्तु। तै० सं० ५।६।१॥

एतद्विषये वायुपुराणस्याधोलिखितः श्लोको द्रष्टुमर्हः—

१. समस्तस्य ब्रह्माण्डस्योत्पत्त्या एतादृशाः संख्यातीता अण्डाः समुत्पद्यन्ते। तदुक्तं विष्णुपुराणे —
अण्डानां तु सहस्राणां सहस्राण्ययुतानि।
ईदृशाना तथा तत्र कोटिकोटिशतानि च॥ वि० पु० २।७।२७॥
वायुपुराणेऽपि—अण्डानामीदृशानां तु कोट्यो ज्ञेयाः सहस्रशः।१५१।४६॥

पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च ।
महदादयो विशेषान्ता अण्डमुत्पादयन्ति वै । ४।७४।।

यदा तस्मिन्नण्डे पृथिव्यादयो लोकाः पूर्णतामापद्यन्ते तदा सोऽन्तरूष्मणा पच्यमानः स्वर्णनिभः संजाते । तदुक्तं मनुना—

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । १।९।।

तादृशावस्थापन्नः सोऽण्डरूपो गर्भो हिरण्याण्डशब्देन—हिरण्यगर्भशब्देन वा व्यवह्रियते । अस्यैव वर्णनं निम्नमन्त्र उपलभ्यते—

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीमुत द्यां कस्मै देवाय हविषा विधेम ।।
ऋ० १०।१२१।१।।

द्यावापृथिव्यादीनां तस्मिन्नेवाण्डे निर्माणात् स एव द्यावापृथिव्यौ दधार ।

पूर्णतामापन्नोऽण्डः कालान्तरे यदाऽभिद्यत, तस्मिन् काले द्यावापृथिव्यौ अत्यन्तं समीपवर्तिनावास्ताम् । तथा च मन्त्रवर्णो भवति—

जामी सयोनी मिथुना समोकसा इति । ऋ० १।१५७।४।।

अस्मिन् मन्त्रे द्यावापृथिव्योः 'जामी'विशेषणेन सहोत्पत्तिरुभयोर्द्योत्यते । 'सयोनी'पदेन महदण्डरूपैकयोनित्वम्, 'मिथुना'पदेन परस्परं सहभावः, 'समोकसा' पदेन समानं च बोध्यते ।

अस्यैव 'समोकसा' पदस्य ब्राह्मणग्रंथेष्वित्थं व्याख्यानमुपलभ्यते—

द्यावापृथिवी सहास्ताम् ।
तै० सं० ५।२।२।। तै० ब्रा० १।१।३।२।।

सह हैवेमावग्रे लोकावासतुः । शत० ७।१।२।२३।।

कालान्तरे समोकसौ द्यावापृथिव्यौ वियुता अभवताम् । सा वियुतिर्दूरता सूर्यस्य दिव्यारोहणेन सम्पन्ना । तदेतेन मन्त्रवर्णेन सूच्यते—

अग्न आयाहि वीतये इति । साम० पू० १।१।१।।

व्याख्याता चेत्थमियमृक् शतपथे—

अग्न आयाहि वीतये इति । तद्वेति भवति वीतय इति समन्तकमिव ह वा इमे अग्रे लोका आसुरिति उन्मृश्या हैव द्यौरास इति ।

अस्मिन् मन्त्रे द्यावापृथिव्योर्वीतिभावोऽग्निकारणेनाभवदिति प्रतिपाद्यते ।

सहभूतयोर्द्यावापृथिव्योर्वीतिभावे 'इमौ लोकौ सह सन्तौ व्यैताम्' इति ब्राह्मणवादोऽपि भवति ।

सूर्यस्य दिव्यारोहणमनेकेषु मन्त्रेषु श्रूयते । तद्यथा—

इन्द्रो दीर्घाय चक्षसे आ सूर्यं रोहयद्दिवि । ऋ० १।७।३।।

द्यावापृथिव्योर्वीतिभावेऽन्तरिक्षं वरीयोऽभवत् । तथा च मन्त्रवर्णो भवति—

यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्र ।
येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः
इति ऋ० ३।२२।२।।

द्यावापृथिव्योर्वियुत्याऽन्तरिक्षप्रादुर्भावो ब्राह्मणग्रन्थेष्वपि श्रूयते । तद्यथा—

सह हैवेमावग्रे लोकावासतुः । तयोर्वियतयोरन्तरेणाकाश आसीत् तदन्तरिक्षमभवत् । श० ७।१।२।२३।।

अग्निकर्मणा द्यावापृथिव्यौ वियुतौ, तयोर्वियुत्यैवान्तरिक्षं वरीयोऽजायत । अत एव मन्त्रे येना (अग्निना) न्तरिक्षमुर्वाततन्थ इत्युक्तम् ।

द्यावापृथिव्योर्वियुतिभावे, सूर्यस्य दिव्यारोहणे, अन्तरिक्षस्य वरीयत्वे चान्येऽपि देवा सहायका

अभूवन् । अतो वेदेषु अन्येषामपि देवानां इदं कर्मत्रयं श्रूयते ।

मरुतां मरीचयः—आपृथिवीत आदिवं मरुतां विषयः ते चैकोनपञ्चाशत्संख्यकाः । ते च सप्त परिवहेषु सप्तसप्तत्वेन विभक्ताः । अत एवोक्तं शतपथे—सप्त सप्त हि मारुता गणाः (९।३।१।२५) इति । तेष्वेको गणो[1] मरीचिनामा । तेषां मरीचिनाम्नां मरुतां मरीचयो रश्मयोऽपि । अत एव वेदेष्वनेकत्र मरुतां रुक्मवक्षसः इति विशेषणमुपलभ्यते । तेषां रश्मयः सूर्यरश्मिभिरुपमीयन्ते विरोकिणः सूर्यस्येव रश्मयः (ऋ० ५।५५।३) इति । उत्तरमन्त्रे सूर्यस्येव मरुतामपि चक्षणं दर्शनं दिदृक्षेण्यत्येव श्रूयते—आभूषेण्यं वो मरुतो महित्वनं दिदृक्षेण्यं सूर्यस्येव चक्षणम् (ऋ० ५।५५।४) इति । यजुषि वायुरसितिग्मतेजाः (१।२४) इति पठ्यते । शतपथे चास्य मन्त्रस्य व्याख्याने एतद्वै तेजिष्ठं तेजो यदयं पवते १।२।४।७) इति श्रूयते । एतदेव सर्वमभिसमीक्ष्य गीतायां स्मर्यते—मरीचिर्मरुतामस्मीति (१०।२१) ।

सहस्ररश्मिः सूर्यः—सूर्ये ये रश्मयः सन्ति ते वैदिकविज्ञानानुसारं सहस्रप्रकाराः सन्ति । सूर्यरश्मीनां सहस्रविधत्वम् ऋग्वेदे ह्येवं श्रूयते—युक्ता अस्य हरयश्शता दश (६।४७।१८) इति । तथा च ब्राह्मणवादो भवति—सहस्रं हैत आदित्यस्य रश्मयः (जै० उप० ब्रा० १।४४।५) इति । महाभारतेऽप्युक्तम्—यस्य रश्मिसहस्रेषु (शान्ति० ३७२।३) इति । पुराणेषु एषां सहस्ररश्मीनां विस्तरेण वर्णनमुपलभ्यते (द्र० वायु ५३।१९-२३; मत्स्य १२८।१८-२२) ।

एत एव सहस्रविधा रश्मयः स्थूलतया सप्तधा विभज्यन्ते । अत एव सूर्यः सप्तिरश्मिः सप्ताश्व आदिनामभिरपि व्यवह्रियते ।

आदित्यमण्डले कार्ष्ण्यम्—आदित्यमण्डलस्य मध्यभागे कृष्णाः कलङ्काः सन्ति । अत एव वेदेषु आदित्यः कृष्णपदेन बहुधा स्मर्यते । यथा—कृष्णो नोनाव वृषभो यदीदन् (ऋ० १।७९।२) इति । अत्र कृष्णपदेन आदित्यरूपोऽग्निः स्मर्यते, आ कृष्ण ईं जुहुराणो जिघर्ति (ऋ० ।१७।१४) इत्यादिषु आदित्यरूप इन्द्रः । अत एव जैमिनिब्राह्मणे श्रूयते—असावेव संवत्सरो योऽसौ तपति । तस्य यद् भाति तत् संवत्, यन्मध्ये कृष्णं मण्डलं तत्सर इत्यधिदैवतम् इति ।

इमे कृष्णाः कलङ्का सदा परिसर्पन्ति, नैकत्र तिष्ठन्ति । अत एव इमे 'सर' नाम्ना स्मर्यन्ते । एते एव चादित्यमण्डलस्थाः कृष्णाः कलङ्काः सर्पणादेव सर्पा इत्युच्यन्ते । आदित्यमण्डले सर्पाणां सद्भावः ये अमी रोचने दिव···तेभ्यः सर्पेभ्यो नमः (१३।३) इति याजुषमन्त्रे श्रूयते । अत एव ब्राह्मणवादोऽपि भवति-सर्प्या वा आदित्याः[2] (तां० ब्रा० २५।१५।४) इति । सर्प्याः सर्पवन्तः ।

पाश्चात्यैर्वैज्ञानिकैरादित्यमण्डलस्थाः कृष्णाः कलङ्काः, तेषामेकत्रानवस्थानं चाधुनैव विज्ञातम् ।

१. सम्भवतः षष्ठपरिवहस्था मरुतो मरीचिनामानः । तत्सान्निध्यात् पञ्चमसप्तमपरिवहस्थानां मरुतामपि 'रुक्मवक्षसः' विशेषणं क्वचिद् वेदेषूपलभ्यते ।

२. क्वचित् 'सर्पा वा आदित्याः' इत्येव पाठः ।

वैदिका विद्वांसस्तु वेदद्वारा सिद्धान्तमिमम् आदिकालादेव विदन्ति । सर्वविधानामतीन्द्रियविज्ञानानां बोधनादेव वेदानां वेदत्वम् । तदुक्तम्—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एतं विन्दन्ति वेदेन तस्माद् वेदस्य वेदता ॥[1]

यस्तूपायो न बुध्यते आधिदैविकस्याध्यात्मिकस्य चातीन्द्रियविज्ञानस्येति शेषः ।

एवं वेदज्ञानस्य महत्त्वं वैभवं वा प्रदर्श्य तेषां प्रसारोपायाः केचन प्रस्तूयन्ते—

वेदानां पुनःप्रसारायोपायचिन्तनात् पूर्वमेतद् विज्ञातव्यं यत् किमत्र कारणं यस्मात् परमविद्यानाम् आकरभूतानाम् अपि वेदानां प्रसार उत्तरोत्तरं न्यूनतां भजत इति । न हि रोगनिदानमविज्ञाय चिकित्सा प्रवर्तत इति न्यानुसारं वेदप्रसारह्रासकारणविज्ञाने सत्येव तत्प्रसारोपायानां चिन्ता सम्भवति । तस्मात् प्रथमं वेदप्रसारह्रासकारणान्युपस्थाप्यन्ते । तत्र कानिचित् कारणानि भारतीयपरम्पराप्रसूतानि सन्ति, कानिचिच्च पाश्चात्यविद्वद्भिरुत्पादितानि । तत्र तावत् भारतीयपरंपराप्रसूतानि—

१—वेदाध्ययनं केवलमदृष्टार्थम्, न किञ्चित् दृष्टफलार्थमित्येकम् ।

एतन्मतस्य प्रसारान्मन्त्रा अनर्थका[2] इत्येतन्मतं प्रादुरभवत् । तेन वेदानां मानवजीवनेन सह यः साक्षात् सम्बन्ध आसीत् स प्रणष्टः, तन्नाशाद् वेदाध्ययनमनर्थकं मन्यमानास्तं परिहापितन्तः ।

२—वेदाः केवलं यज्ञार्थं प्रवृत्ताः, नातोऽन्यत् किमपि तेषां प्रयोजनमिति द्वितीयम् ।

एतन्मतस्य प्रादुर्भावस्य वेदानाम् आधिदैविकाध्यात्मिकयोर्विज्ञानयोः साकं यः साक्षात् सम्बन्ध आसीत् स नाशमुपगतः । तन्नाशाद् वेदा निष्प्रयोजनत्वमापन्नाः । तेन 'प्रयोजनमननुदिश्य मन्दोऽपि न प्रवर्तते' इति न्यायात् वेदाध्यतनात् ग्लायन्तो वेदाध्ययनम् अत्यजन् ।

३—यज्ञा अपि केवलम् अदृष्टार्था एव, न तेषामन्यत् किमपि लौकिकं फलमिति तृतीयम् ।

एतन्मतस्य प्रसाराद् यज्ञानां सृष्टिविज्ञानपरिज्ञापनरूपस्य मुख्यस्य प्रयोजनस्य परित्यागात् साम्प्रतिकास्तर्कप्रधानाः श्रद्धाविरहिता मानवास्ततो ग्लायन्तो यज्ञान् अत्याक्षुः । यज्ञकर्मणां लोपात् ब्राह्मणवृत्तेर्नाशः, तन्नाशात्तेषां वेदाध्ययनप्रवृत्तिरपि संकोचं प्राप्ता ।

४—स्त्रीणां शूद्राणां च वेदश्रवणेऽपि नाधिकारः,[3] कुतस्तदध्ययने धारणे चेति चतुर्थम् ।

स्त्रीणां वेदाध्ययनप्रतिषेधात् पत्न्यो वेदज्ञानविरहिता अभूवन् । तासां च वैदिकज्ञानसंस्कार-

१. सायणाचार्यकृतस्य तैत्तिरीयसंहिताभाष्यस्योपोद्घात उद्धृतोऽयं श्लोकः ।

२. यदि मन्त्रार्थप्रत्यायनायानर्थकं भवतीति कौत्सः, अनर्थका हि मन्त्रा इति निरुक्ते १।१५॥ पूर्वमीमासायां (१।२।३१।३९) चैतन्मतं बहुभिर्हेतुभिरुपपादितम् ।

३. अथास्य वेदमुपश्रृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्, वेदोच्चारणे जिह्वाच्छेदः, धारणे शरीरभेद इति (वे० शी० भाष्ये १।३।३८) । स्त्रीशूद्रौ नाधीयाताम् इति च ।

राहित्यात् ता ज्ञानावृतचेतसोऽजायन्त । तेन तासामपत्यान्यपि वैदिकसंस्कारविरहितानि समभूवन् । तेन कुलान्यकुलतां गतानि । शूद्राणां वेदश्रवणाधिकारस्याप्यपहरणाद् वैदिकसंस्काराराहित्यात् ते आर्याः सन्तोऽप्यनार्याः संवृत्ताः । एवं मनुष्यसंख्यायाः स्त्रीरूपोऽर्धो भागः, शूद्ररूपश्चान्यस्तदर्धो भागोऽर्थाद् मानवसंख्यायाः ३।४ पादत्रयात्मको भागो वैदिकसंस्काराराहित्याद् अनार्यत्वमभजत् । तदुक्तं भगवता मनुना—

कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥
(३।६३) इति ।

शनकैस्तु क्रियालोपदिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
(१०।४३) इति च ।

यदा क्षत्रियजातयोऽपि वेदानध्ययनेन वैदिकक्रियालोपैश्च वृषलत्वं गतास्तर्हि स्त्रीणां तु का कथा यत्राज्ञानान्धस एव साम्राज्यं विद्यते ।

५—पाश्चात्यशिक्षायाः प्रभावेण तपोज्ञानोपेतानां ब्राह्मणानाम् उपेक्षाऽनादरभावश्चेति पञ्चमम् ।

जगति किलैष नियमः 'समाजे यादृशस्य पूजा भवति सर्वोजनः, तादृशमात्मानं भावयितुं प्रवर्तते' इति । अतएव पाश्चात्यशिक्षाप्रभावेण पाश्चात्यभावभाषादीक्षितानां धनिनां चानार्याणामपि सम्मानभावनाया उदयाद् ब्राह्मणा अपि आङ्गलभाषाध्ययने येनकेन च प्रकारेण धनोपार्जनम् एवात्मनः श्रेयः पश्यन्तः कुलपरम्परागतं वेदाध्ययनं पर्यत्याक्षुः ।

अथेदानीं पाश्चात्यविद्वद्भिरुत्पादितानि तानि कारणानि समुपस्थाप्यन्ते यैर्वेदप्रचारस्य विशेषतो ह्रासः समभूत्—

१—बहूनाम् ईसाईमतपक्षपातिनां मैक्समूलरप्रभृतीनां विदुषाम् 'अनुसंधानकर्म'व्याजेन वैदिकवाङ्मयविषये अनर्गलप्रलापद्वारा तन्निन्दा तत्राश्रद्धोपादनं चेत्येकम् ।

अनेके पाश्चात्यविद्वांसः संस्कृतभाषायां वैदिकवाङ्मये च कं भावं मनसि निधाय प्रयत्नमकार्षुरित्यस्य ज्ञापकानि तेषां कतिपयवचनान्युद्ध्रियन्ते—

प्रथममतिप्रसिद्धस्य वैदिकवाङ्मये कृतपरिश्रमस्य मैक्समूलरस्यैव वचनान्युपस्थाप्यन्ते—

(क) 'वैदिकसूक्तानाम् एका महती संख्यैतादृशी वर्तते या परमबालिशा, जटिला, अधमा, साधारणी चास्ति' इति ।[1]

(ख) 'मदीयो वेदानुवादः, मदीयं (सायणभाष्यसहितम् ऋग्वेदस्य) संस्करणं चोत्तरकाले भारतस्य भाग्यविधानेऽत्यन्तं प्रभविष्यति । यतोऽयं (ऋग्वेदः) तेषां धर्मस्य मूलमस्ति । अहं निश्चयेनानुभवामि, यद् (भारतीयधर्मस्य) इदं मूलं कीदृगस्तीत्यस्य निदर्शनं गतत्रिसहस्रवर्षेषु समुपजायमानानां प्रभावाणां समूलोत्पाटनाय एकः प्रधानभूत उपायोऽस्ति' इति ।[2]

(ग) 'संसारस्य सर्वधर्मग्रन्थेषु नवीना प्रतिज्ञा (ईसाप्रोक्तो बाइबलनामा) ग्रन्थ उत्कृष्टो वर्तते ।

१. मैक्समूलरस्य भाषणम्, संख्या ४, सन् १८८२ ।
२. मैक्समूलरेण स्वपत्न्यै लिखितस्य (सन् १८६६) पत्रस्यांशः ।

तदनु कुराननामा ग्रन्थः, य आचारशिक्षायां नवीन-प्रतिज्ञाया एव रूपान्तरमस्ति, स्थापयितुं शक्यते। तत्पश्चात् प्राचीना प्रतिज्ञा, दाक्षिणात्यं बौद्धपिटकम्, वेदाः, अवेस्ता आदयो ग्रन्था: सन्ति ।[1]

मैक्समूलरस्य वैदिकवाङ्मयकार्यं तन्मित्राण्यपि कया दृष्ट्याऽपश्यन्, तदर्थम् ई० बी० पुसे नामकेन मित्रेण मैक्समूलराय प्रहितस्य द्रष्टुमर्हमेतद् वचनम्–

'भवतामेतत् (वेदविषयकं) कार्यं भारतीयान् ईसाईमतानुयायिनो विधातुं क्रियमाणेषु प्रयत्नेषु नवयुगप्रवर्तकं भविष्यति' इति ।

अलबर्ट वैवरनामा प्राध्यापकः प्राह—

'कृष्णस्य मतं, यस्य प्रभावः सम्पूर्णे महाभारते व्याप्तोऽस्ति, द्रष्टुमर्हं वर्तते। तद् ईसाईकथानकम् अपरपाश्चात्यमतप्रभावं चोपस्थापयति' इति ।[2]

अत एव ईसाईमतपक्षपातिनोऽनेके विद्वांसः 'महाभारतग्रन्थ ईसाकालतो बहुपश्चात् संग्रथितः' इति लिखन्ति ।

मोनियर विलियम्सनामा प्राध्यापको येन संस्कृताङ्गलभाषाया महान् कोशो निर्मितः, स स्वकोशरचनाप्रयोजनं तदुपोद्घात इत्थं प्रदर्शयति—

'यदिदं संस्कृताङ्गलभाषाकोशनिर्माणकार्यं संस्कृतग्रन्थानुवादकार्यं च बौडननिक्षेपनिधि (ट्रस्ट) द्वारा सम्पद्यते तद् भारतीयान् ईसाईमते दीक्षयितुं प्रवृत्तानां स्वदेशीयानां साहाय्यप्रदानायैव क्रियते' इति ।

सत्येवं, को नाम विपश्चित् मैक्समूलरादिनाम् अनुसन्धानमिषेण कृते कार्ये विश्वसेत् ?

२—भाषाविज्ञानमिषेण दैव्यां वाचि वैदिक-वाङ्मये च भीषणप्रहारो द्वितीयम् ।

पाश्चात्यैर्विद्वद्भिः कतिपयानां भाषाणां तुलनात्मकमध्ययनं कृत्वा भाषाविज्ञाननामैकं मतमाविष्कृतम् । यद्यपि तदत्यन्तं दोषपूर्णं विद्यते, तथापि तमाश्रित्य सर्वभाषाजननीं दैवीं वाचं स्वस्थानतः प्रच्यावयितुं भारोपीयनाम्ना कल्पिताम् असिद्धमूलां वर्तमानानां भारोपीयभाषाणां जननीं स्वीकृत्य ग्रीकलैटिनभाषादिवत्, तस्याः पौत्रस्थानी दैवी वाक् इति मतमुद्घोषयां चक्रुः ।

नैतावदेव, अपितु यथा प्राकृताः पांशुलापादा जना अज्ञानेन सम्यगुच्चारणासामर्थ्येन च शिष्टव्यवहृतेषु शब्देषु वर्णलोपागमविकारविपर्ययादीन् कुर्वन्ति, कालान्तरे च स एवापशब्दराशिर्भाषात्वं भजते, तथैवेयं दैवी वागपि कस्यांचित् पूर्वतन्यां भाषायां विकारं प्राप्य समुत्पन्ना । अपरे ब्रुवते पूर्वतन्यां कस्यांचित् प्राकृतभाषायामेव संस्कारं विधाय ब्राह्मणैरियं गीर्वाणवाणी निष्पादिता इति। तदाहाध्यापको रैप्सनः—

भारतीयार्यलिखितं वृत्तं साहित्यिकभाषासु सुरक्षितमस्ति। या व्यावहारिकभाषाभ्यो विकासं प्रापिताः ।[3]

३—डार्विनप्रतिपादितं विकासवादमनुसृत्य

१. मैक्समूलरः स्वपुत्राय प्रहिते पत्रे लिखितवान् ।
२. द्र०—संस्कृतसाहित्यस्येतिहासे (सुलभे संस्करणे, सन् १९१४) १८९ तमे पृष्ठे टिप्पणी ।
३. केम्ब्रिज हिस्ट्री ऑफ इण्डिया, अ० २, पृष्ठ ५३,५७ ।

भारतीयैतिह्यखण्डनं तृतीयम् ।

यावान् भारतीयइतिहासः प्राचीनेषु ग्रन्थेषूपलभ्यते स सर्वोऽप्यैकमत्येन प्रतिपादयति यत्सृष्ट्यादौ मानवाः परमज्ञानिनोऽनेकविधशक्तिसम्पन्ना धर्मसत्त्वोपेताः परमदीर्घायुष आसन्। उत्तरोत्तर च ज्ञाने शक्तौ आयुषि च ह्रासः समजनि, उपचीयमानरजस्तमस्काश्च सम्बभूवुः। एतद्विपरीतं विकासवादमतं ब्रवीति मनुष्या आदौ पशुवद् जाङ्गलिका मांसाहारिणोऽज्ञानिनश्च आसन्। उत्तरोत्तरं ते विकसिताः सन्त सभ्या अभूवन्। नैतावदेव, अपितु मनुष्याणां पूर्वजा वनमानुषा आसन्, तेषां पूर्वजा अन्ये, इत्येवं सर्वेऽपि प्राणिनः 'अमीबा' नाम्नः प्राणितः उत्तरोत्तरं विकसिताः सन्तो-मनुष्यत्वमापुः। एतं मतमाश्रित्यैव पाश्चात्या विदुषः वेदान् पांशुलपादानाम् अविलादीनां गीतानीति ब्रुवन्ति।

एतान्येव पाश्चत्यमतानि अस्मद्देशीयेषु विश्वविद्यालयेष्वद्यापि पठ्यन्ते। तेन विश्वविद्यालयेष्वधीतानां वैदिकवाङ्मये न केवलमश्रद्धैवोत्पद्यतेऽपि तु त एव कालान्तरे अनुसन्धानकार्यं कुर्वन्तः वैदिकवाङ्मयविषये ततोऽपि हीनान् मतानाविष्कुर्वन्ति। एतद् द्योतयितुं द्वयोः भारतीयविदुषोर्यास्कदिर्वचनसम्बन्धिमतमुपस्थाप्यते—

(क) राजवाडे इत्युपनामा काशीनाथ आह—

निरुक्तस्य निर्वचनपद्धतिरेतादृशी वर्तते यत् तं विज्ञानं विद्यास्थानं वा नैव वक्तुं शक्यते···निरुक्तं विज्ञानं नास्त्यपितु विज्ञानस्योपहासो वर्तते···। निरुक्तस्य निर्वचनप्रकारो भ्रममात्रं मानवमस्तिष्कस्य व्यथः प्रयोगो वा वर्तते।······अहंससाहसं वक्तुं शक्नोमि यन्निरुक्तस्य निर्वचनपद्धतिरयुक्ता (मूर्खतापूर्णा) विद्यते, पुनरपि तदद्ययावत् स्वस्थानं (वेदाङ्गत्वं) भजते।······निरुक्ते बहुसंख्यकानि निर्वचनानि मूर्खतापूर्णानि सन्ति, यतस्तानि अशुद्धं सिद्धान्तमाश्रयन्ति ।······एतत्सिद्धान्ताश्रयेण बहूनि निर्वचनानि कल्पितानि।······शुद्धानि निर्वचानानि त्वत्यन्तमल्पसंख्यकानि विद्यन्ते' इति।[1]

(ख) अपरो भाषाशास्त्रित्वेन परमख्यातिमापन्नः सिद्धेश्वरवर्माऽऽह—

'एतेन प्रकटीभवति यद् यास्कस्य निर्वचनप्रदर्शनोत्साहः प्रमत्ततासीमां प्राप्तः' इति[2]।

'यास्कोऽतिनिर्वचनकर्ता आसीत्। तस्य निर्वचनप्रमत्तता मत्कल्पनाशक्तिमुज्झितवती। तस्य कल्पनाया दरिद्रता विलक्षणा वर्तते। एतेन गम्भीरदोषेण स न केवलं व्यर्थानि, शिथिलानि, सत्यात् पराण्येव निर्वचनानि करोति, अपितु प्रतीयते यत्स "लक्षणादिभिरपि केषाञ्चिच्छब्दानामर्थस्य विस्तारो भवति" इति नैव ज्ञातवान्। अत एव लाक्षणिकार्थद्योतनायापि स पृथक् निर्वचनानि आचष्टे, इति।[3]

१. द्र० 'काशिनाथ राजवाड़े' द्वारा सम्पादितस्य निरुक्तस्य (पूनानगरस्थभण्डारकरप्राच्यविद्यानुसंस्थानसंस्थातःप्रकाशितस्य) भूमिका, पृष्ठ ४०-३३।

२. इटीमोलोजि ऑफ यास्क, पृष्ठ ३।

३. स एव ग्रन्थः, पृष्ठ ८।

एतैरुद्धरणैरतिविस्पष्टं भवति यत्पाश्चात्यविद्वद्भिर् ईसाईमतपक्षपातेन अनुसन्धानमिषेण च वैदिकवाङ्मयविषये यः प्रलापो विहितस्तमेव विश्वविद्यालयेष्वधीत्य भारतीया अपि विद्वांसः कीदृशीं मानसिकीं दासताम् अभजन् इति। एते खलु पाश्चात्यदृशैव सर्वं पश्यन्ति, नैतेषां स्वचक्षुर्विद्यते, अत एव पश्यदक्षण्वान् न विचेतदन्धः (ऋ० १।१६४।१६) इति श्रुत्या सत्यमुच्यते।

एवं वेदप्रचारस्य ह्रासकारणान्युपस्थाप्य तत्प्रतीकाराय केचन उपाया निर्दिश्यन्ते—

(१) वेदानां वैदिकवाङ्मयप्रामाण्येन तादृशी वैज्ञानिकी व्याख्या कर्तव्या, येन साम्प्रतिकास्तर्कप्रधाना अपि मानवा वेदेषु श्रद्दधीरन्, तदध्ययने च प्रवर्तेरन्।

(२) यज्ञानामपि तथा वैज्ञानिकी व्याख्या विधेया येन वैदिककर्मकाण्डविषये लौकिकानां पाश्चात्यशिक्षादीक्षितानां च हृदयेषु श्रद्धोत्पद्येत। यज्ञानां प्रचारेण वेदाध्ययने प्रगतिर्निश्चितैव।

(३) वेदानाम् अध्ययने श्रवणे च सर्वेऽधिकृताः स्युः (यः खलु वस्तुतोऽनधिकारी भविष्यति, स स्वयमेव तदध्ययनादुपरंस्यति)।

वेदाधिकारनिरूपणप्रसङ्गे तत्र भवान् सत्यव्रतसामश्रम्यप्याह—

शूद्रस्य वेदाधिकारे साक्षाद् वेदवचनमपि दर्शितं स्वामिदयानन्देन—'यथेमां वाचं कल्याणीमावदानि जनेभ्यः। ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय च' (वा० सं० २६-२) इति।[1]

१. ऐतरेयालोचने, पृष्ठ ७।

यदि नाम उक्तमन्त्रानुसारं शूद्राणामतिशूद्राणामपि वेदज्ञानेऽधिकारस्तर्हि स्त्रीभिः किमत्रापराद्धम्। द्विजपत्नीत्वाद् तदध्ययनं प्राप्तमेव। गार्गीवाचक्नव्यादयो बह्व्यो ब्रह्मवादिन्यो बभूवुरिति वैदिकग्रन्थेष्वतितरां प्रसिद्धमस्ति।

पुराकाले स्त्रीणामपि उपनयनसंस्कारो भवति स्म, गुरोः सकाशाच्च ता वेदं अधीयते स्म। तदुक्तम्—

पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते।
अध्ययनं च वेदानां भिक्षाचर्यं तथैव च॥

स्त्रीणामुपनयने मन्त्रलिङ्गमपि दृश्यते—भीमा जाया ब्राह्मणस्योपनीता (ऋ० १०।१०९।४) इति।

शूद्रकुलोत्पन्नानां मातङ्गदीनां बहूनां ब्राह्मणत्वप्राप्तिरितीहासेषु श्रूयते। ब्रह्मत्वप्राप्तिर्न वेदाज्ञानमन्तरेण कथमपि सम्भवति। तस्माद् वेदाध्ययनात् तच्छ्रवणाद् वा न कश्चिदपि बलान्निरोधयितव्यः। तदैव च कृण्वन्तो विश्वमार्यम् (ऋ० ९।६३।५) इति मन्त्रलिङ्गानुसारं विश्वं समस्तमपि वैदिकधर्मानुयायिनं विधातुं समर्था भविष्यामः। वेदस्य सर्वत्र भूमण्डले प्रसारः स्यादित्याकाङ्क्षया स्वामिदयानन्देनार्यसमाजस्य तृतीयो नियमो विहितः—

वेदाः सर्वसत्यविद्यानामाकरग्रन्थाः सन्ति, वेदानां पठनं पाठनं श्रवणं श्रावणं च समस्तानामार्याणां परमो धर्म इति।

अहो बत ! वेदवैदिकमतप्रचारार्थोत्सर्गीकृतजीवनेन स्वामिदयानन्देन प्रवर्तित आर्यसमाजोऽपि स्वस्याचार्यस्याज्ञामुपेक्ष्य स्वीयपरमधर्माद् वेदाध्ययनात् सम्प्रति पराङ्मुखः सम्पन्नः। तस्मात् को

वेदानुद्धरिष्यति इति प्रश्नः सर्वदा जागर्त्येव ।

४—पाश्चात्यविद्वद्भिर् ईसाईमतपक्षपातेन अनुसन्धानमिषेण वैदिकवाङ्मयनिन्दका ये ग्रन्था लिखितास्तेषां विश्वविद्यालयेषु पाठनं यथा सर्वथा निरुद्धं भवेत् तथा प्रयत्नो विधेयः । येन तत्राधीता भाविनो विद्वांसो वेदनिन्दका वेदोपेक्षका वा नोत्पद्येरन् ।

५—पाश्चात्यैर्विद्वद्भिः भाषाविज्ञान-वैदिकदेवशास्त्र-वैज्ञानिकेतिहास-आदिविषयान् विकासवादं वा पुरस्कृत्य भारतीयभाषा-संस्कृति-साहित्य-इतिहास-आदिविषयेषु यदन्यथा प्रलपितमस्ति तत्प्रचारस्य निरोधाय स्वीयया भारतीयदृष्ट्या भाषाविज्ञानादिविषयका ग्रन्था निर्मातव्याः, पाश्चात्यानां मतानां सम्यगालोचना खण्डनं च विधेयम् ।

६—वेदानां वैदिकवाङ्मयस्य च प्रचाराय प्राचीनानां ग्रन्थानां मुद्रणाय तादृश उपायो विधेयो येनेमे ग्रन्था सुलभाः स्युः ।

७—वेदप्रसाराय सुरभारती-प्रचारः आवश्यकः । नहि तदन्तरेण वेदप्रचारः कथमपि सम्भविष्यति । अतः संस्कृत-भाषा-प्रचाराय तादृशो यत्नो विधेयो येन पुनरियमस्माकीना राष्ट्रभाषा स्वीयं वास्तविकं पदमलं कुर्यात् । तदर्थम् च सुगमरीत्या संस्कृत-भाषा-शिक्षका ग्रन्था निर्मातव्याः, स्थाने स्थाने च संस्कृत-पाठशालानां स्थापना कार्या । संस्कृतभाषामध्येतुमुत्साहवर्धनाय छात्रेभ्यः पुरस्काराः वृत्तयो वा प्रदेयाः ।

आशासे, पुरस्तान्निर्दिष्टैः कतिपयैरुपायैर्वेदानां पुनः प्रसारेऽवश्यं साहाय्यं लप्स्यते ।

## उपसंहारः

माननीया विद्वद्वर्याः । यद्यप्यहमल्पमतित्वादतत्त्वज्ञ एनत्स्थानानुपयुक्तश्चास्मि तथापि स्वीयकार्यपूर्त्यै स्वकीयेन वैदिकवाङ्मयस्यालपीयसानुशीलनेन वेदानां महत्त्वनिदर्शनाय तेषां पुनः प्रसाराय च ये मया केचन विचारास्तत्रभवतां महानुभावानां पुरस्तात् समुपस्थापितास्तेषु यत्किंचिन्मया स्वकीयेनाज्ञानेनान्यथा प्रतिपादितं स्यात् तत्परिहाप्य युक्तांशं च स्वीकृत्य मामनुग्रहीष्यन्ति महाभागा इत्याशासे ।

श्रौतमार्गं समुदिश्य श्रौतयज्ञस्य प्रक्रियाः ।
व्याख्याता लेशतो ह्यत्र वेदविद्याप्रसिद्धये ।
प्रसाराय च वेदानाम् उपायाश्चेह दर्शिताः ।
न तु मीमांसकख्यातिं प्राप्तोऽस्मीत्यभिमानतः ॥

अन्ते च—

आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि ।
नहि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते ॥

इरि निवेदयन् स्वकीयं वक्तव्यमुपसंहरामि ।



राजस्थानसंस्कृतसाहित्यसम्मेलनस्य
द्वादशाधिवेशने दर्शनपरिषदि
अजयमेरुस्थराजकीयमहाविद्यालये
संस्कृतविभागाध्यक्षस्य
श्रीसुरजनदासस्वामिनः

# अध्यक्षीयं भाषणम्

## दर्शनदर्शनम्

"निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् ।
न ऋते त्वत् क्रियते किञ्चनारे महामर्कं मघवञ्चित्रमर्च ।।
चार्वाकं यस्य पादौ सुगतमतमथो दीर्घजङ्घालजङ्घे,
काणादं निम्ननाभिर्जिनमतमुदरं स्वाक्षपादं तु वक्षः ।
मीमांसाऽसौ भुजौ कापिलमुपनिषदः शीर्षदेशो ललाटं,
योगः सोऽङ्गैरपूर्वैर्जगति विजयते पूरुषो दर्शनाख्यः ।।
प्राक्कर्मोदयतो हि यस्य मिथिलादेशे शरीरोदयः
श्रीविश्वेशदयोदयाच्च समभूत् काश्यां सुविद्योदयः ।
राज्ञा प्रीत्युदयादभूज्जयपुरे सम्पत्तिभाग्योदय—
स्तस्मै श्रीमधुसूदनाय गुरवे स्यान्मे प्रणामोदयः ।।
श्रीरामचन्द्रं नौमीड्यं यत्पादाम्बुजसेवया ।
लब्धादनुग्रहादेव वक्तुं किञ्चित् समुत्सहे ।

अयि सम्माननीयाः सुरसरस्वतो-समुपासन-विशुद्धहृदयाः सहृदया विपश्चिद्धौरेयाः ! किं नाम दर्शनम् ? कति वा दर्शनानि ? किं परस्परं दर्शनानां विरोधः ? किं वा दर्शनानि अलौकिकवस्तुनिरूपण-पराण्येव अहोस्विदस्ति तेषां सम्बन्धो जीवनेन कोऽपि ? इति प्रश्ना उद्वेजयन्ति इदानीन्तनानां प्रज्ञम्मन्यानां पाश्चात्यभौतिकचाकचिक्यचमत्कृत-चेतसां सचेतसां चेतांसि । अत एतेषां प्रश्नानां विवेचनमेव दर्शनपरिषदः प्रधानमुद्देश्यम् । न चैतेषां प्रश्नानां याथातथ्येन विवेचनं मयाऽल्पमतिना कर्तुमिह पार्यते परं यथामति प्रस्तूयते किञ्चिदनगलं श्रीमतां पुरतः स्वीयं बालिश्यं च प्रकाश्यते ।

दर्शनशब्दो हि दृश्यतेऽनेनेति व्युत्पत्त्या सामान्यज्ञानार्थपराद् दृश् धातोः करणे ल्युटि निष्पन्नः तं ज्ञानसाधनभूतं विचारविशेषं पद्धतिविशेषं वा बोधयति येन कोऽहम्, किं वा एतद् दरीदृश्यमान-मनुभूयमानं वा जगत्, कुतो वाऽस्यागमः, किं चास्योपादानम्, को वाऽस्याऽऽधारः, को वाऽस्य स्रष्टा, कश्चैतेषां परस्परं सम्बन्धः इत्यादिप्रश्नानां समाधानं जायेत । एतेषां प्रश्नानां समाधानाय मनीषि-

भिर्या विभिन्नाः विचारसरण्यः पद्धतिविशेषा वा समाश्रितास्त एव विभिन्ना भिर्दर्शनाभिधाभिर्लोके प्रसिद्धिमुपगताः।

वस्तुतस्तु दरीदृश्यमानस्यास्य जगतो विश्वस्य वा किं मूलम्, किं वा तस्य स्वरूपमिति जिज्ञासैव दर्शनानां मूलम्। अन्येषां 'कोऽहम्' इत्यादीनां प्रश्नानां विश्वान्तर्भूतत्वेन विश्वमूलजिज्ञासयैव गतार्थत्वात्। एषा विश्वमूलजिज्ञासा चानादिकालत एव मानवमनसि स्वभावत उद्भवन्ती दृश्यते। यथोक्तं गुरुचरणैः ब्रह्मवेदरहस्यापरनामधेये सिद्धान्तवादे—

**यद् दृश्यते तत् किमु वा तदाऽभवत्**
**कियत्प्रमाणं च किमस्य कारणम्।**
**का तस्य संस्था गतिरस्य कीदृशी-**
**त्येवं बुभुत्सा स्वत एव जायते॥**

अतएव प्रसिद्धानां षण्णां दर्शनानामुद्भवात् प्रागपि देवयुगे वैदिकानां महर्षीणां मनसि समुद्भूतेयं जिज्ञासा तस्याश्च दिग्दर्शनं समुपलभ्यते स्पष्टं ऋग्वेदमन्त्रेषु। यथा—

**किंस्विद् वनं क उ स वृक्ष आस**
**यतो द्यावापृथिवी निष्टतक्षुः।**
**मनीषिणो मनसा पृच्छतेदु**
**यदध्यतिष्ठद् भुवनानि धारयन्॥**

ऋ. १०।८१।४

**"न विजानामि यदि वेदमस्मि**
**निण्यः सन्नद्धो मनसा चरामि।**
**यदा माऽगन् प्रथमजा ऋतस्य**
**आदिद्वाचो अश्नुवे भागमस्याः"॥**

ऋ. १।१६४।३७

**"अचिकित्वाञ्चिकितुषश्चिदत्र**
**कवीन् पृच्छामि विद्मने न विद्वान्।**
**वियस्तस्तम्भ षडिमा रजांसि**
**अजस्य रूपे किमपि स्विदेकम्।**
**को अद्धा क इह प्रवोचत्**
**कुत आजाता कुत इयं विसृष्टिः॥**

ऋ. १०।१२९।६

अस्या विश्वमूलजिज्ञासायाः शान्तये समाधानाय वा दर्शनानां प्रवृत्तिः। तथा हि—

त्रेधा विभक्तं विश्वमिदम्—अधिभूतम्, अध्यात्मम्, अधिदैवतञ्चेति। तथा च त्रेधा विभक्तस्यास्य विश्वस्य मूलतत्त्व-प्रतिपादनपरं तदिदं दर्शनशास्त्रम् एकमेव सदपि त्रेधा विभक्तम्। तत्राधिभूतविश्व-प्रकृतिमहत्तत्त्वादिनिरूपणपरं प्राधानिकं सांख्य-दर्शनम्। आधिदैविकविश्वरूपपुरुषवर्णनपरं च शारीरिकं दर्शनम्।

अयमाशयः—वैशेषिकदर्शनं दरीदृश्यमानस्यास्य मूलं क्षरात्मकान्यणुभूतान्येवेति निर्धारयामास। वैशेषिकदर्शनानुसारं यानि खलु पटघटादीनि साव-यवानि द्रव्याणि तानि स्वानुगतैः संयोगसचिवैः तन्तुकपालादिभिरवयवद्रव्यैरारभ्यमाणानि दृष्टानि। तत्सामान्येन सर्वमेव सावयवं वस्तु स्वसम्बद्धैः (समवायसम्बन्धेन सम्बद्धैः) संयोगसचिवैः अवयव-

द्रव्यैरारब्धं भवति। सा चेयमवयवधारा परमाणौ विश्रान्तिमेति। तस्माद् यत्र साऽवयवधारा विश्राम्यति तस्यान्तिमस्यावयवस्य परमाणोर्नित्यत्वमुररीकृत्य तैः संयोगसचिवैः परमाणुभिरेव गिरिसमुद्रादिकं सर्वं सावयवमनित्यं जगदारभ्यते इति। सावयवानां द्रव्याणां च पृथिव्यप्तेजोवायुभेदेन चातुर्विध्यात् परमाणूनामपि चातुर्विध्यमङ्गीकृत्य तेभ्यः परमाणुभ्य एवेदं सर्वं भौतिकं जगदुत्पद्यते इत्यङ्गीकुर्वन्ति ते। तत्र सावयवेषु द्रव्येषु वर्तमानं गुणकर्मादिकञ्च परमाणुगतगुणकर्मादिभिरेव साक्षात् परम्परया वोत्पद्यते इति तस्यापि मूलकारणं परमाणुगतं रूपादिकमेवेति अन्ततः परमाणुष्वेव सा विश्वकारणता सिध्यति। द्रव्यगुणकर्मातिरिक्तानां सामान्यविशेषसमवायानां तु तन्मते नित्यतैति अकार्यत्वात्, तेषां कारणगवेषणा दूरापेतैव। एवं क्षराणां परमाण्वात्मकानां भूतानामेव भौतिकजगत्कारणत्वनिर्धारणात् आधिभौतिकमिदं वैशेषिकदर्शनम्। अपि वा क्षराक्षराव्ययभेदेन त्रिविधे पुरुषे क्षरपुरुषस्यैव द्रव्यगुणकर्म-सामान्य-विशेषसमवायरूपैः षोढा विभक्तस्य, प्राधान्येन निरूपणादपीदं दर्शनमाधिभौतिम् 'क्षरः सर्वाणि भूतानि' इति गीतास्मृतेः क्षरस्य भूतात्मकत्वात्।

परमेतेन नेदं मन्तव्यं यत् वैशेषिकदर्शनं क्षरातिरिक्तस्य कस्यापि तत्त्वस्य निरूपणमेव न विधत्ते। आनुषङ्गिकतया क्षरेषु विभक्तः अक्षरस्यात्मनोऽपि जीवात्मपरमात्मभेदेन तत्र निरूपणदर्शनात्। परं तदक्षरतत्त्वं निरूपयदपि तद्दर्शनं न तस्य जगन्मूलत्वमभिप्रैति निमित्तरूपेणापि। अपितु जगत्कारणेषु परमाणुषु या प्रारम्भिकी सर्गानुकूला संयोगक्रिया वर्तते तत्रापि अदृष्टमेव निमित्तं मनुते न त्वीश्वरम्। अतः सर्वथेदमाधिभौतिकं दर्शनमिति सिद्धम्। एवं षडध्यायात्मकं कापिलदर्शनमाध्यात्मिकम्। यतस्तद्दर्शनं मूलप्रकृतिमव्यक्तात्मिकां महत्तत्वादीनि सप्त प्रकृतिविकृतिरूपाणि तत्त्वानि च विश्वस्य मूलत्वेनावधारयति। तदुक्तं सांख्यकारिकायाम्—

**प्रकृतेर्महांस्ततोऽहङ्कारस्ततो गणश्च षोडशकः।**
**तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि॥**

एवं भगवद्गीतायामपि सिद्धविद्यानिरूपणावसरे सप्तमेऽध्याये परापरप्रकृतिभेदेन एषामाध्यात्मिकानां तत्त्वानामेव जगत्कारणत्वं प्रतिपादितम्। तथा—

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।**
**अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥**
**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत्॥** इति।

उपर्युक्तरीत्याऽत्र दर्शने प्रकृतेर्विश्वमूलत्वं प्रतिपादितम्। प्रकृतिश्च स्वभावः। स्वभावश्चाध्यात्मम्। यथा गीतायामष्टमेऽध्याये निरूपितम् 'स्वभावोऽध्यात्ममुच्यते' इति। तस्मादिदमाध्यात्मिकं दर्शनम्। यद्यपि दर्शनमिदं प्रकृतिव्यतिरिक्तस्य पुष्करपलाशवन्निर्लेपस्य अकर्तुः पुरुषस्यापि निरूपणं विधत्ते, परं न तस्य विश्वमूलतामङ्गीकुरुते, कार्यकारणातीतस्यासङ्गस्य तस्य विश्वत्वासम्भवात्। अपितु प्रकृतिः पुरुषस्य चेतनस्य प्रेरणामन्तरैव स्वत एव पुरुषस्य भोगापवर्गसाधनाय जगद्रचनायां प्रव-

तैते तदुक्तं सांख्यकारिकायाम्—

**वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।**
**पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥**
**औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।**
**पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदेवाव्यक्तम् ।** इति

चतुरध्यायात्मकं वैयासिकं शरीरिकं तु दर्शनं न क्षराणां परमाणूनां जगत्कारणत्वमभिप्रैति न वाऽक्षररूपायाः परस्याः प्रकृतेः, अपितु कार्यकारणातीतस्य ब्रह्मणो जगत्कारणत्वमभिधत्ते । प्रतिपादितं चैतत् 'जन्माद्यस्य यतः' इति सूत्रे 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति' इति ब्रह्मलक्षणमुपपाद्य 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, अथानन्दं प्रयन्त्यभिसंविशन्ति इत्यानन्दस्य जगन्मूलत्वमुपपादयन्त्या तैत्तिरीयश्रुत्या । आनन्दश्च 'नित्यं विज्ञानमानन्दं ब्रह्म' 'रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इत्यादि—श्रुतिभिर्ब्रह्मैवेति ब्रह्मण एव जगत्कारणत्वम् ।

'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात्' इत्यत्रापि ब्रह्मैव जगत उपादानं निमित्तं चेति सुस्पष्टं निरूपितम् । अग्रे च कथमेकाकिनोऽसहायस्य निर्विकारस्यापरिणामिनो जगत्कारणत्वं सम्भवति, लोके ससहायानां कुलालादीनामेव घटपटादिनिर्मातृत्वदर्शनात् । इत्याशङ्क्य कृत्स्नप्रसक्त्यधिकरणे सर्वोपेताधिकरणे च निर्विकारस्यासहायस्यापि च ब्रह्मणो, मायया सर्वशक्तिमत्वेन जगत्कारणत्वं सम्भवति इति महता संरम्भेण प्रतिपादितम् । एवमेतद्दर्शनं पुरुषस्यापरिणामिनो निर्विकारस्य जगत्कारणत्वं प्रतिपादयति मायया, उपरिष्टात् प्रतिपादितरीत्या । पुरुष एव चाधिदैवतम् । यथोक्तं गीतायाम्—"पुरुषश्चाधिदैवतम् । इति । अत एवेदं दर्शनमाधिदैविकं दर्शनमुच्यते । अत्रापि प्राधान्येन ब्रह्मण एव निरूपणम्, आनुषङ्गिकरूपेण त्वाधिभौतिकानामाध्यात्मिकानां च प्रकृत्यादीनामपि अत्र निरूपणं विद्यते । एवं क्षरमक्षरम् अव्ययं च पुरुषं क्रमशो विश्वमूलत्वं प्रतिपादयदिदं वैशेषिकं प्राधानिकं शारीरिकं चेति त्रयमपि दर्शनपदवाच्यम् ।

वस्तुतस्तु नैतानि त्रीणि दर्शनानि अपितु क्षराक्षराव्ययभेदेन त्रिपुरुषात्मकस्यैकस्य पुरुषस्य विश्वमूलत्वप्रतिपादकं दर्शनत्रयात्मकमेकमेव दर्शनम् । अस्ति च क्षराक्षराव्ययानां त्रयाणामपि पुरुषाणामविरुद्धं जगत्कारणत्वम् । तत्र क्षरः पुरुषस्तावत् विश्वपदार्थानामुपादानकारणं विद्यते, परिणामिनः क्षरस्यैव विश्वपदार्थोपादानत्वसम्भवात् । न हि अपरिणामिनोरक्षराव्ययपुरुषयोरुपादानत्वं सम्भवति, परिणामिनामेव मृदादीनां लोके घटादिविकाराणामुपादानत्वदर्शनात् । अक्षरं चापरिणामि विश्वपदार्थानां निमित्तकारणम् । घटादिविकाररूपेण अपरिणामिनामेव कुलालादीनां घटादिकार्यं प्रति लोके निमित्तत्वदर्शनात् । अव्ययं च ब्रह्म नोपादानम्, नापि निमित्तं विश्वस्य, अपितु अधिष्ठानरूपमालम्बनकारणम् । अत एव 'जन्माद्यस्य यतः', 'प्रकृतिश्च

प्रतिज्ञादृष्टान्तानुरोधात्' इति सूत्राभ्यां ब्रह्मणो जगत्कारणत्वं प्रतिपादयन्तोऽपि वेदान्तिनः माया-शबलितस्यैव ब्रह्मणोऽभिन्ननिमित्तोपादानतां ब्रुवते न तु शुद्धस्य कार्यकारणातीतस्याव्ययस्य ब्रह्मणः। तत्तु कार्यकारणातीतं सदालम्बनमेव जगतो भवति न तु निमित्त मुपादानं वा। प्रतिपादयन्ति च विवर्त्तवादमुररीकुर्वन्तस्ते ब्रह्मणोऽधिष्ठा-नरूपामुपादानतां जगत्प्रति न तु परिणामरूपा मुपादानताम्।

एतेषु त्रिष्वपि क्षराक्षराव्ययेषु विभिन्नरूपा कारणता विद्यते इति प्रतिपादितं शास्त्रेष्वपि। तद्यथा—

**"मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्।**
**सम्भवः सर्वभूतानां ततो भवति भारत ॥**
**सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः।**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता।**

इति गीतास्मृतौ क्षरब्रह्मरूपस्य महद्ब्रह्मणो जगत्कारणता प्रतिपादिता, सापि चोपादानरूपा, योनिशब्दप्रयोगात् उपादानस्यैव योनित्वसम्भवात् एवं—

**'यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः**
**सहस्रशः प्रभवन्ते सरूपाः।**
**तथाऽक्षराद् विविधाः सौम्य भावाः**
**प्रजायन्ते तत्र चैवापि यन्ति ॥**

**यथोर्णनाभिः सृजते गृह्णते च**
**यथा पृथिव्यामोषधयः सम्भवन्ति।**
**यथा सतः पुरुषात् केशलोमानि**
**तथाऽक्षरात्संभवतीह विश्वम् ॥**

इति मुण्डकश्रुतिभ्यामक्षराद्विश्वस्य संभूतिमुप-पादन्तीभ्यामक्षरस्य जगत्कारणता प्रतिपाद्यते। अत्र क्षरादेव विश्वस्य सृष्टिर्निरूपितेति तु न शङ्क्यम्। पूर्वापरसन्दर्भविलोकनेन अत्राक्षरादेव सृष्टिप्रति-पादनसिद्धेः। तथाहि पूर्वम् 'अथ परा यया तदक्षर-मधिगम्यते' इत्युक्त्या परविद्यया अक्षराधिगति-रित्युक्त्वा 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं, नित्यं विभुं सर्वगतं सुसूक्ष्ममित्या-दिनाऽक्षरवर्णनमेवोपक्रान्तम्। अन्तेऽपि—

**यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः।**
**तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते ॥**

इत्यक्षरस्यैव वर्णनम्। अन्यथा क्षरग्रहणे तु कथं तस्मात् 'तस्मादेतद् ब्रह्म जायते, इत्युक्त्या क्षरब्रह्मणो जनिः प्रतिपाद्येत, स्वस्मात्स्वस्योत्पत्ते-रसम्भवात्। ब्रह्माक्षरसमुद्भवम्' इति गीतास्मृत्या-प्यक्षरादेव ब्रह्मणः सम्भवस्य प्रतिपादनात्। एवमेव—

**मया ततमिदं सर्वं जगदव्यक्तमूर्तिना।**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥**
**यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान्।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥**

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ।।**
**मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।**
**हेतुनानेन कौन्तेय जगद् विपरिवर्तते ।।**

इत्यादिषु मच्छब्दवाच्यस्याव्ययस्य प्रकृतिसाचिव्येन, सृष्टिकारणत्वं प्रतिपादितम् । अन्यत्रापि सप्तमेऽध्याये 'भूमिरापः' इत्यादिना श्लोकद्वयेन परापरप्रकृती निर्दिश्य

**एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।**
**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।।**

इति पद्येऽव्ययस्य स्पष्टं जगत्कारणत्वं प्रतिपादितं, तच्चालम्बनरूपमेव 'मत्स्थानि सर्वभूतानी-त्याद्युक्त्या तथा 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इत्युक्त्या च तस्यालम्बनताया एव प्रतिपादनात् । कठश्रुतावपि-'एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।' इत्यादिमन्त्रेणाव्ययस्यालम्बनतैव बोध्यते। मच्छब्देनाव्ययस्यैव ग्रहणमिति तु गीतायामेव स्पष्टं प्रतिपादितं दृश्यते यथा—

**नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ।।**
**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ।।**
**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ।।**

**चातुर्वर्ण्यं मया सृष्टं गुणकर्म-विभागशः ।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ।।**
**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।**
**मोहितं, नाभिजानाति लोको मामजमव्ययम् ।।**

इति।।

एवं क्षराक्षराव्ययभेदेन त्रयाणामपि पुरुषाणां जगत्कारणत्वम् । तदेतेषां त्रयाणामपि निरूपणं सहैव पञ्चदशेऽध्याये गीतायां समुपलभ्यते । यथा—

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।**
**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।**इति

उपर्युक्तरीत्या त्रिविधस्य पुरुषस्य ब्रह्मणो वा एकैकभागस्य जगत्कारणत्वप्रतिपादनपराणि त्रीण्येव दर्शनानि-काणादं वैशेषिकं, कापिलं सांख्यम्, वैयासिकं शारीरकञ्च । अथवा त्रिविधाः खलु विश्वपदार्थाः आध्यात्मिकाधिभौतिकाधिदैविकभेदभिन्नाः । तेषां पदार्थानां प्राधान्येन निरूपणपराणि त्रीण्येव दर्शनानि सांख्यवैशेषिक-वेदान्ताभिधानि । एतानि त्रीण्यपि दर्शनान्यास्तिकानि वेदप्रामाण्यस्य त्रिभिरप्यविशेषेण स्वीकारात्। नातोऽधिकानि आस्तिकदर्शनानि । अत एव जगत्सृष्टिविषये आस्तिकदर्शनानां त्रय एव वादाः प्रसिध्यन्ति—आरम्भवादः, परिणामवादः, विवर्तवादश्च । तत्र वैशेषिकदर्शनम् अणूनां संयोगात्

पूर्वमविद्यमानस्याभिनवस्य द्व्यणुकादिरूपकार्यस्यारम्भमुत्पत्तिमङ्गीकरोतीति तदनुसारं सृष्टेरारम्भः।

कापिलं दर्शनं तु नाभिनवस्य कस्यापि पदार्थस्योत्पत्तिमङ्गीकरोति न वा कस्यापि पदार्थस्य विनाशम्, 'नासतो विद्यते भावो नाभावो विद्यते सतः' इति गीतास्मृतेः। अपितु अव्यक्तरूपेण (कारणरूपेण) विद्यमानस्यैव वस्तुनः कारणसामग्रीसमवधानेन व्यक्तता (कार्यता) जायते। एषैव सृष्टिः। प्रलये च विनाशसामग्रीसमवधाने व्यक्तस्य तस्य पुनरव्यक्तता (कारणरूपता) जायते। तस्यादव्यक्तस्य व्यक्तीभावः (कार्यरूपेण परिणामः) एव सृष्टिः। अतस्तत् (दर्शनं) सृष्टौ परिणामवादमङ्गीकरोति नारम्भवादम्।

वेदान्तिनस्तु कार्यकारणातीतं ब्रह्म जगत्कारणं ब्रुवाणा दुग्धस्य दधिवत् न जगत् ब्रह्मणस्तात्विकः परिणामः, अपरिणामिनो ब्रह्मणस्तत्त्वतो जगद्रूपेण परिणामासम्भवात्। अपितु रज्जुसर्पादिवत् संसारः ब्रह्मणोऽतात्विकः परिणामः इति वदन्ति। अतात्विकः परिणाम एव च विवर्तः इति ते सृष्टिविषये विवर्तवादमभ्युपयन्ति। अत एवोक्तं वाचस्पतिमिश्रैः—

**विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः।**
**अनादिवासनोद्भूतो न सारूप्यमपेक्षते॥**इति।

नैभ्यस्त्रिभ्यो वादेभ्योऽतिरिक्तः कोऽपि वादः, सृष्टिविषये आस्तिकदर्शनेषूपलभ्यते इति त्रीण्येवास्तिकदर्शनानीति सिध्यति।

यत्तु न्यायवैशेपिकसांख्ययोगपूर्वमीमांसोत्तरमीमांसाभेदेन दर्शनानां षड्विधत्वमुच्यते तत्तु न युक्तम्, न्याययोगपूर्वमीमांसानां दर्शनत्वाभावात्। यतो हि न तेषु कस्यापि वैशेषिकादिदर्शनप्रतिपादितातिरिक्तस्य तत्त्वस्य विश्वमूलता निरूपिता न वा आधिभौतिकस्य, आध्यात्मिकस्य, आधिदैविकस्य वा कस्यापि विश्वपदार्थस्य निरूपणा कृता। तथाहि—न्यायशास्त्रे गौतमीये काणादेन प्रतिपादितादणुरूपाद् विश्वमूलाद् ऋते न कस्यापि विश्वमूलस्य प्रतिपादनं विद्यते। न वा आधिभूताध्यात्माधिदैवतभेदभिन्नेषु विश्वपदार्थेषु कस्यापि निरूपणं तत्रास्ति अपि तु वादजल्पवितण्डाभेदभिन्नायाः कथाया अङ्गानां प्रमाणप्रमेयसंशयप्रयोजनादीनां पदार्थानां निरूपणं तत्रोपलभ्यते। अतः कथाङ्गानां निरूपकत्वेन कथाशास्त्रमिदं न तु दर्शनम्। तत्र आत्मेन्द्रियार्थादिभेदेन भिन्नानां द्वादशप्रमेयाणां विश्वाङ्गत्वेन तन्निरूपकत्वादस्य दर्शनत्वं तु नाशङ्क्यम्, तेषामपि तत्र कथाङ्गत्वेनैव निरूपणात् विश्वाङ्गत्वेन निरूपणाभावात्। तथाहि आत्मेन्द्रियादीनां प्रमेयाणां निरूपणे वादविषयस्यैवाभावेन कथाया एवानुपपत्तिः। तस्मादुपन्यस्तैः आत्मेन्द्रियादिप्रमेयैः कथाशास्त्रमेव विज्ञापयितुमिष्यते न विश्वात्मस्वरूपम्। पूर्वापरप्रकरणदर्शनेन तथैवार्थलाभात्। तस्मादिदं तर्कशास्त्रापरपर्यायं गौतमीयं तन्त्रं कथास्वरूपप्रतिपादनपरं कथाशास्त्रमेव न दर्शनम्।

एवं योगशास्त्रमपि पातञ्जलं न पृथग्दर्शन-

शास्त्रम्। तत्रापि न सांख्यप्रतिपादितां प्रकृतिं विहाय अतिरिक्तस्य कस्यापि विश्वमूलस्य प्रतिपादनं कृतम्। अपितु यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिभेदभिन्नस्य चारित्र्यलक्षणस्य सांख्यशास्त्रोत्तराङ्गस्यैव प्रतिपादनमत्र कृतम्।

अयमभिसन्धिः न हि सम्यग्दर्शनं सम्यज्ज्ञानं सम्यक् चारित्र्यं चान्तरा कस्यापि तत्वस्य याथातथ्येनाधिगतिर्भवति। तस्माद् विश्वमूलं किमिति बोधनपराया विश्वविद्याया अपि अस्ति पर्वत्रयम्-सम्यग्दर्शनं, सम्यग्ज्ञानं, सम्यक् चारित्र्यं चेति। प्रथमतो दृष्टस्यार्थस्य श्रवणेन आपाततः सामान्यज्ञानमात्रं भवति, न तु श्रोतुस्तत्र साक्षात्काराय किञ्चित्कर्त्तव्यमुपपद्यते । इदमेव विश्वविद्यायाः प्रथमं पर्वोच्यते।

परं सामान्यतो ज्ञातेऽर्थे अभिनिवेशो नाम धारणा न जायते। तस्मादभिनिवेशरूपधारणोपपत्यर्थं सामान्यतो ज्ञातानामर्थानां प्रत्यक्षीकरणायापि प्रयत्नः समाचरणीयः। अत एव भगवान् गौतमः धर्मस्मृतौ ज्ञानाभिनिवेशाभ्यामर्थसिद्धिं ब्रूते । धारणारूपोऽभिनिवेशश्च अवगमजनितः संस्कार एव। न हि इन्द्रियैर्मनसि प्रापितानां, मनसा च बुद्धौ, बुद्ध्या च आत्मनि प्रापितानां विषयाणां स्थिरीकरणरूपं निर्धारणं विना धारणात्मकोऽभिनिवेश उत्पद्यते। अतः सामान्यतो ज्ञातस्यार्थस्य विशेषज्ञानद्वारा इन्द्रियादिद्वारेण आत्मनि स्थिरीकरणं तज्जनितसंस्कारोत्पादनं च विश्वविद्यायाः द्वितीयं पर्व सम्यग्ज्ञानात्मकम्। अत्र चोपदेशेन सामान्यतो गृहीतस्यार्थस्य परीक्षाकर्मणा साक्षात्काराय प्रयत्नः कर्त्तव्यो भवति।

सम्यक्चारित्र्यं तु सम्यग्दर्शनेन सामान्यतो गृहीतस्य, सम्यग्ज्ञानेन च परीक्षाकर्मणा साक्षात्कृतस्य चार्थस्याधिगतये तदनुकूलस्याचरणस्यानुशीलनमेव। अर्थाधिगतये आचरणार्थं शक्तिलाभायैव दर्शनज्ञानयोः साफल्यम्। यस्य तु तथाऽऽचरितुं शक्तिर्नोदयते, तस्येदं सम्यग्दर्शनं सम्यग्ज्ञानं चोभयमप्यनर्थकमेव । आचरणमन्तरा वस्त्वधिगतिरूपसिद्धेरभावात् । तस्मात्सम्यगाचरणेन तदर्थंवशीकारे मानवेन यत्न आधेय एव। एतदेव सम्यक्चारित्र्यं नाम विश्वविद्यायाः तृतीयं पर्व।

एतेषां त्रयाणां सिद्धौ विश्वविद्या साफल्यमेति। अतएव विश्वपदार्थप्रतिपादिकायां दर्शनापरपर्यायां विश्वविद्यायां पर्वत्रयमेतत् सर्वत्र निरूप्यते। आधुनिकैरप्यालोचकैः, तत्त्वमीमांसाप्रमाणमीमांसाभेदेन दर्शनापरपर्यायायां विश्वविद्यायां उपर्युक्तस्य पर्वत्रयस्य निरूपणं क्रियते।

तत्र तत्त्वमीमांसैव, सम्यक्दर्शनं नाम प्रथमं पर्व, तत्र सामान्यतस्तत्वानां मीमांसनात्। प्रमाणमीमांसैव सम्यग्ज्ञानं नाम द्वितीयं पर्व तत्र तत्त्वानां प्रमाणद्वारा परीक्षणात्। नहि प्रमाणमन्तरा कस्यापि वस्तुनः परीक्षा भवति, सिद्धिर्वा जायते। अतएवोक्तमभियुक्तैः 'नहि प्रतिज्ञामात्रेण कस्यापि वस्तुनः सिद्धिरपि तु लक्षणप्रमाणाभ्याम्'

इति । आचारमीमांसैव च सम्यक् चारित्र्यं नाम तृतीयं पर्व । तदन्तरा तस्य ज्ञातस्यार्थस्याधिगत्यभावेन साफल्यानधिगतेः ।

एव प्रतिदर्शनमस्य पर्वत्रयस्याऽऽवश्यकता, परं कापिले सांख्यदर्शने केवलं तत्त्वमीमांसा प्रमाणमीमांसेति पर्वद्वयी एवोपलभ्यते । न तु तद्द्वाराधिगततत्त्वाधिगतये आचारमीमांसारूपस्य सम्यक्चारित्रस्य तृतीयस्य पर्वणो निरूपणमुपलभ्यते । तस्यैव पूर्तिस्तु अष्टाङ्गयोगात्मकेन आचारमीमांसकरूपेण पातञ्जलेन योगतन्त्रेण क्रियते, इति पातञ्जलं योगशास्त्रं सांख्यस्यैवाचारात्मकस्योत्तराङ्गस्य पूरकत्वेन सांख्यशास्त्राङ्गमेव न ततोऽतिरिक्त दर्शनमिति ध्येयम् । यथोक्तं गुरुचरणैः सिद्धान्तवादे—

**सांख्यं ज्ञानं योगस्तत्कर्मेत्येकमेव तच्छास्त्रम् ।**
**सांख्यप्रवचनसंज्ञं भेदस्त्वाचार्यभेदतो भ्रान्तः ।।**
**सम्यग्दर्शनतो यत् सम्यग् ज्ञानं ततश्चरित्रं च ।**
**सम्यक् स्यात्तत एव ज्ञानोदयतो विमुच्यतेऽस्यात्मा**
**अतएव प्रतिदर्शमन्ते ह्युपदिश्यते क्रियायोगः ।**
**आचारणैकेन हि सांख्ये त्वाचार्यभेदतः कथितः** ।इति

इत्थमेव पूर्वमीमांसाशास्त्रमपि न पृथग्दर्शनम् । तत्रापि कस्याप्यतिरिक्तस्य विश्वमूलस्याविवेचनात्, नाप्यात्मनस्तत्र प्राधान्येन विचारः । अपितु कर्मोपपादकवैदिकवाक्यार्थसमन्वयमात्रमत्रोपादितमिति विचारशास्त्रमेव तत् न विश्वशास्त्ररूपं दर्शनम् । यद्यप्येवं शारीरकस्यापि वैयासिकस्य शास्त्रस्य वेदान्तवाक्यतात्पर्यविचारकत्वेन विचारशास्त्रतैव मन्तव्या न दर्शनत्वम्, तथापि तत्र अद्वैतब्रह्मणो विश्वमूलत्वमुपदिष्टं 'जन्माद्यस्य यतः' इत्यादिभिः सूत्रैः । तस्मादस्य यथाकथञ्चिद्दर्शनत्वमङ्गीकर्तुं शक्यते । अतएवोक्तं गुरुचरणैः सिद्धान्तवादे—

**एवमपीदं ब्रह्माद्वैतं विश्वस्य**
**मूलमिह शास्त्रे ।**
**उपदिष्टमस्ति तस्माच्छारीरक-**
**दर्शनं भ्रमाद् ब्रुवते** ।।इति।।

उपर्युक्तरीत्या अध्यात्माधिभूताधिदैवतभेदेन विश्वमूलविवेचनपराणि विश्वतत्त्वविवेचनपराणि च त्रीण्येव दर्शनानीति सिध्यति ।

न चैतेषु दर्शनेषु विश्वमूलमादाय कोऽपि विरोधोऽस्ति यतो हि त्रीण्यपि दर्शनानि स्थूलारुन्धतीन्यायेन क्षराक्षराव्ययभेदभिन्नं त्रिपुरुषात्मकमेकमेव पुरुषं क्रमशो निरूपयन्ति । तथा हि वैशेषिकदर्शन क्षरस्य पुरुषस्य, कापिलं सांख्यदर्शनं चाक्षरपुरुषस्य, तृतीयं शारीरिकं च दर्शनं ताभ्यां परे वर्तमानस्याव्ययपुरुषस्य निरूपणं कुरुते । इति भिन्नभिन्नानां पुरुषाणां, त्रिपुरुषात्मकस्य एकस्य पुरुषस्य भिन्नभिन्नानामंशानां वा निरूपणादिषु न काऽपि परस्परविरोधशङ्का कार्या । इत्थं चतत् क्षरब्रह्मणोऽक्षरब्रह्मणोऽव्ययब्रह्मणश्च पृथक् तन्त्रेण क्रमिकमात्मत्वमभ्युपगच्छतामेषां वैशेषिकप्राधानिकशारीरकाणां क्रमनिर्देशनिबन्धनं प्रतितन्त्रं वैषम्यं सोपाधिकत्वान्मर्षणीयमेव । यथार्थतस्तु न किमपि तत्र वैषम्यं, प्रतिदर्शनं विभिन्नपुरुषस्य निरूपणात् ।

यत्तु दर्शनानां षट्त्वमाख्यायते तत्तु न आस्तिक-

दर्शनानां षट्त्वमभिप्रैति । अपितु आस्तिकनास्तिकोभयदर्शनानि संगृह्य तथात्वमभिप्रैति । तत्रोपरिनिर्दिष्टानि त्रीणि दर्शनानि आस्तिकानि, तैरविशेषेण वेदप्रमाण्यस्याङ्गीकारात् । त्रीणि च चार्वाकसौगतस्याद्वादाभिधानानि नास्तिकदर्शनानि, तैर्वेदप्रामाण्यस्य सर्वथानङ्गीकारात् । सम्भवति च तेषां त्रयाणां दर्शनत्वं, यतस्तत्र प्रतितन्त्रं अतिरिक्तस्य विश्वमूलस्य प्रतिपादनं विहितम् । यथा चार्वाकः पृथिव्यप्तेजोवायुरूपाणि भूतान्येव विश्वमूलत्वेनोररीकुरुते । सौगतः असत्पर्यायं शून्यमेव विश्वमूलमाचष्टे, यस्य निराकरणं भगवता व्यासेन महता संरम्भेण 'नासतोऽदृष्टत्वात्' 'नाभाव उपलब्धेः' 'क्षणिकत्वाच्च' इत्यादिभिः सूत्रैः ब्रह्मसूत्रे कृतम् । स्याद्वादिनश्च पुद्गलानामेव विश्वमूलत्वं साधयन्ति, इति पृथक् पृथक् विश्वमूलस्य प्रतिपादनात् विश्वपदार्थानां च पृथक् पृथक् विवेचनात् तेषां दर्शनत्वं सिध्यति । विश्वमूलविवेचनपराया विश्वपदार्थनिरूपणपरायाश्च विश्वविद्याया एव दर्शनपदवाच्यत्वात् ।

एषा च विश्वमूलजिज्ञासा ज्ञानप्रधानस्य मानवस्य मनसि स्वत एव समुद्भवति, इति पूर्वमुक्तम् । अतएव तच्छान्तये विश्वमूलविषयको विचारः अर्वाचीनानां षण्णां दर्शनानां समुद्भवात्प्रागपि देवयुगे वेदकाले पुरातनैः साध्यैर्देवैः प्रवर्तित आसीत् । तेषां च परस्परं मतभेदेन सृष्टिमूलमवलम्ब्य तदानीं दशवादा प्रचलिता आसन् । यथा (१) सदसद्वादः, (२) अमृतमृत्युवादः, (३) अहोरात्रवादः (४) आवरणवादः, (५) अम्भोवादः, (६) रजोवादः, (७) व्योमवादः, (८) अपरवादः, (९) दैववादः, (१०) संशयवादश्च । एतेषां सृष्टिविषयकाणां वादानामुल्लेखः ऋग्वेदे दशममण्डले नासदासीये सूक्तचपरपर्याये सूक्ते समुपलभ्यते पूर्वपक्षरूपेण प्रतिषेध्यरूपेण वा । तान् सर्वान् वादान् निराकृत्य साध्यजातीय एव परमेष्ठी ब्रह्मा ब्रह्मैव जगतः कारणमिति निर्धारितवान् । यतोहि नैतानि मतानि सृष्टेर्मूलतत्त्वनिरूपकाणि अपितु अर्वाक्सृष्टिकारणप्रतिपादकानि । व्योमादीनां जगद्रूपत्वेन जगतः मूलत्वासम्भवात् । ब्रह्मैवैतादृशं मौलिकं तत्वं यतः दशवादेषु सृष्टिमूलतत्वेन निर्धारितानां व्योमादीनामप्युत्पत्तिः संजायते । दशवादेषु निरूपितानां सृष्टिमूलतत्वानां ब्रह्मण्येव समन्वयश्च प्रदर्शितस्तेन महात्मना । तदर्थं नासदासीये सूक्त एव दृष्टिक्षेपो विधेयः । यथा—(१) नासदासीन्नो सदासीत्तदानीं नासीद् (२) रजो नो (३) व्योमा (४) परो यत् । (५) किमावरीवः कुह कस्य शर्मन् (६) अम्भः किमासीद्गहनं गभीरम् ॥ (७) न मृत्युरासीदमृतं न तर्हि न (८) रात्र्या अह्न आसीत् प्रकेतः (९) अर्वाग् देवा अस्य विसर्जनेनाथा को वेद यत आबभूव । आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास ।

**तम आसीत्तमसा गूढमग्रे**
**ऽप्रकेतं सलिलं सर्वमा इदम् ।**
**तुच्छ्येनाभ्वपिहितं यदासी-**
**त्तपसस्तन्महिनाऽजायतैकम् ॥** ऋ. १०।१२९।३
**कामस्तदग्रे समवर्तताधि**
**मनसो रेतः प्रथमं यदासीत् ।**

**सतो बन्धुमसति निरविन्दन्**
**हृदि प्रतीष्या कवयो मनीषा ।।** ऋ. १०।१२९।३

**तिरश्चीनो विततो रश्मिरेषा ।**
**अधःस्विदासीदुपरि स्विदासीत् ।**
**रेतोधा आसन् महिमान आसन्**
**स्वधा अवस्तात् प्रयतिः परस्तात्**
ऋ. १०।१२९।५

एवमस्य सूक्तस्यावलोकनेन स्पष्टं प्रतीयते यत् परमेष्ठिना ब्रह्मणा प्रथममन्त्रेण द्वितीयस्य मन्त्रस्य पूर्वार्धेन षष्ठमन्त्रस्य चोत्तरार्धेन पूर्वं साध्येषु प्रचलतानां सृष्टिमूलविवेचनपराणां दशानां सदसदादिवादानां प्रत्याख्यानं विधाय द्वितीयमन्त्रस्य उत्तरार्धे सृष्टेः पूर्वं प्राणरूपस्य अवातस्य (वातभूतस्य सृष्ट्यन्तर्गतत्वेन तदानीमभावात्) प्राणेन वाचा मनसा[1] चैकस्य अव्ययरूपस्य ब्रह्मण एव सत्ता बोध्यते न तु तदतिरिक्तस्यान्यस्य तत्वस्य । तदानीं आभ्वक्षररूपं यदव्ययं ब्रह्म सलिलं अर्थात् रसरूपमासीत् 'रसो वै सः रसं ह्येवायं लब्ध्वा आनन्दीभवतीति तैत्तिरीयश्रुतेः, तत् ब्रह्म तुच्छरूपयाऽविद्यात्मिकया मायया निगूढ़मासीत् अर्थात् प्रच्छन्नं अज्ञातमासीत्, ततः तस्य रसरूपस्य ब्रह्मणो महिमाप्रभावेण तस्मादाच्छादकात् तपसः = तमसः किञ्चिदेकं तत्त्वं समुदभूत्' इति तृतीयमन्त्रेण प्रतिपादितम् । तच्च तत्त्वं कामो नाम । मनसो रसस्य ज्ञानमयस्य प्रथमं रेतः सकामः सतो रसस्यासति तुच्छे बले बन्धनं कवयोऽपश्यन् । रसबलयोर्बन्धनात्मकोऽयं कामः । रसबलयोगजा एषा प्रथमा मूर्तिरात्मा नाम काममयी सर्वतो रश्मिसारिणी सूर्यवत् । इति चतुर्थमन्त्रेण प्रतिपादितम् । ते च रश्मयः सर्वत्र प्रसृता आसन् ज्ञानक्रियार्थरूपैः । तस्य ब्रह्मणो महादादयः रेतोधसंज्ञा आसन्, महदादिष्वेवाऽव्ययेन ब्रह्मणा गर्भस्य धारणात् । तदुक्तं गीतायाम्—

**'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्**
**संभवः सर्वभूतानां ततो भवति भारत ।।**इति।।

क्षराक्षराद्याश्च महिमान आसन् । तत्र स्वधासंज्ञा महदादयः अवस्तात्, महिमसंज्ञाः प्रयतिसंज्ञाश्चाक्षरादय उपर्यासन्' इति पञ्चममन्त्रेण प्रतिपादितम् । एतदेव रहस्यं भगवता मनुनाऽपि प्रतिपादितं मनुस्मृतौ । यथा—

**आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।**
**अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः ।।**
**ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।**
**महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ।।**
**योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः ।**
**सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ।।**
**सोऽभिध्याय शरीरात् स्वात्सिसृक्षुर्विविधाः प्रजाः**
**अप एव ससर्जादौ तासु बीजमवासृजत् ।।**इति।

१. अत्र मनःशब्देन आनन्दविज्ञानमनःप्राणवाग्रूपपञ्चकलस्याव्ययब्रह्मणो ग्रहणं बोध्यम्, न त्विन्द्रिमनसः प्रज्ञानस्य, न वा संकल्पधर्मकस्येन्द्रियमनसो ग्रहणम् । तदुक्तम्-तदित्थमन्ततः पञ्चकलमव्ययमिष्यते । तदव्ययं मनोनाम्ना श्वोवसीयसमिष्यते । 'तदेतत् श्वोवस्यसं' ब्रह्म' 'मनो वा एतद्यदपरिमितम् । प्रजापतिर्वै मनः' इत्यादिश्रुतयोऽपीममेवार्थम् समर्थयन्ति ।

'असदेवेदमग्र आसीत्' इति छान्दोग्यश्रुतिरपि सृष्टेः पूर्वं सर्वत्राऽव्यक्ताया मायाया व्याप्त्या तत्सद्रूपं ब्रह्म अज्ञातमासीत्, न च तदानीं नामरूपाभ्यां व्याकृतं जगदिदमप्यासीत्, इत्येव बोधयति अस्मादव्ययादेव ब्रह्मणः सर्वा सृष्टिर्भवतीति श्रुतिस्मृतिष्वपि सम्यङ्निरूपितम् ।

**दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।**
**अप्राणो ह्यमनाःशुभ्रो ह्यक्षरात्परतः परः ।।**
**एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।**
**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ।।**
इति।।

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ।।**गीता।।

तैत्तिरीयश्रुतिरपीममेवार्थमुपोद्बलयति । यथा—

**ब्रह्म वनं ब्रह्म स वृक्ष आस**
**यतो द्यावापृथिवी निष्टतक्षुः ।**
**मनीषिणो मनसा विब्रवीमि वो**
**ब्रह्माध्यतिष्ठद् भुवनानि धारयन् ।।**इति।।

तस्मादेतत् अव्ययात्मकं ब्रह्मैव जगतः कारणम्, तस्मादेव च सर्वा सृष्टिर्जायते, इति प्रतिपादितं पुरा परमेष्ठिना ब्रह्मणा देवयुगे वेदनिर्माणकाले । तस्यैव ब्रह्मणोऽर्वाचीने युगे उपनिषत्प्रमाणैर्जगत्कारणत्वं साधितं शारीरकापरपर्यायेण वेदान्तदर्शनेन, इति ब्रह्म एव वस्तुतो जगन्मूलमिति वैदिकः सिद्धान्तः ।

अस्ति च भारतीयदर्शनानां जीवनेन सह घनिष्ठः सम्बन्धः 'न हि प्रयोजनमनुद्दिश्य मन्दोऽपि नाम प्रवर्तते' इत्यङ्गीकुर्वाणानां कोऽपि प्रवृत्तिर्निष्प्रयोजना जीवनेनासम्बद्धा वा भवितुमर्हति । इष्टसाधनताज्ञानस्य तरत एव सर्वप्रवृत्तिमूलत्वमङ्गीक्रियते । अत एव च सर्वत्रानुबन्धचतुष्टयस्यादौ निरूपणं विधीयते भारतीयशास्त्रेषु । दर्शनानामुद्भवहेतुर्विश्वमूलजिज्ञासाऽपि संशयप्रयोजनाभ्यां प्रतिबद्धा वर्तते । न हि संशयं प्रयोजनं चान्तरा कापि जिज्ञासा जन्म लभते । अतएव वाचस्पतिमिश्रैरुक्तम्—यदसंदिग्धमप्रयोजनं च न तत् प्रेक्षावत्प्रतिपित्सागोचरः, यथा समनस्केन्द्रियसन्निकृष्टस्फीतालोकमध्यवर्ती घटः करटदन्ता वा' इति । प्रयोजनं च प्राणिन इष्टरूपत्वात् इष्टेन सम्बद्धत्वाद्वा साक्षात् परम्परया वा जीवनोपयोग्येव भवति नान्यत् ।

अयमभिसन्धिः—भारतीया हि महर्षयो धर्मार्थकाममोक्षाख्यं पुरुषार्थचतुष्टयं मन्यमाना एतेषां चतुर्णां पूर्तावेव जीवनस्य परिपूर्णतां सफलतां च मन्यन्ते । अतएव पुरुषेणार्थ्यमानत्वात् ते पुरुषार्थसंज्ञया व्यपदिश्यन्ते । तेष्वपि चतुर्षु पुरुषार्थेषु प्राधान्येन लौकिकसुखात्मकस्य कामस्म आत्यन्तिकदुःखनिवृत्तिरूपस्य आत्यन्तिकसुखरूपस्य वा मोक्षात्मकस्य च पुरुषार्थस्य प्राधान्यमिष्यते । अतएव प्राणिमात्रस्येयमाशीः—'सुखं मे स्यात् दुःखं मे मा भूयात्' इति । इतरयोस्तु द्वयोः अर्थधर्मयोः उपायत्वेनैव अर्थ्यता वर्तते । तत्र यद्यपि सामान्यतः अर्थस्य कामं प्रति धर्मस्य च मोक्षं प्रति उपायता प्रतिभाति, परं नैकान्ततोऽयं नियमः, अर्थधर्मयोरुभयोरपि काममोक्षोभयं प्रति हेतुत्वात् । यथा—'पात्रत्वाद् धनमाप्नोति धनाद् धर्मं ततः सुखम्' इति नीतिपद्ये अर्थस्य धर्मद्वारा कामं मोक्षं प्रति च हेतुता

प्रतिपादिता । काममोक्षयोरुभयोरपि सुखत्वात् । किञ्च धर्मस्यापि कामं प्रति हेतुता प्रतिपादिता महाभारते । यथा—

**ऊर्ध्वबाहुर्विरौम्येष न च कश्चित् शृणोति माम् ।**
**धर्मादर्थश्च कामश्च स धर्मः किं न सेव्यते ।** इति ।

भगवान् कणादोऽपि 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' इदि धर्मस्वरूपं निरूपयन् धर्मस्य अभ्युदयरूपं सुखं प्रति निश्रेयसरूपं आत्यन्तिकदुःखाभावात्मकं मोक्षं च प्रति हेतुत्वं ब्रूते । अत एवोक्तमुपस्कारे—"वस्तुतस्तु को धर्मः किंलक्षणश्चेति सामान्यतः शिष्य-जिज्ञासायां यतोऽभ्युदयनिःश्रेयससिद्धिरित्युपतिष्ठते । तथा च यतोऽभ्युदयसिद्धिर्यतश्च निःश्रेयससिद्धिस्तदुभयं धर्मः । एवं पुरुषार्थासाधारणकारणं धर्म इति वक्तव्ये परमपुरुषार्थयोः सुखदुःखाभावयोर्विशेषतः परिचयार्थमभ्युदयनिःश्रेयससिद्धिरित्युक्तम् । स्वर्गापवर्गयोरेवान्येच्छाविषयत्वेन परमपुरुषार्थत्वात्" इति । तत्र 'प्रवृत्तिलक्षणो धर्मः' अभ्युदयस्य लौकिकपारलौकिकोभयस्य सुखस्य कारणम् । निवृत्तिलक्षणो धर्मस्तु निश्रेयसरूपस्य मोक्षस्य हेतुः । तस्मात् सिद्धमेतत् सुखं आत्यन्तिकी दुःखनिवृत्तिश्च परमपुरुषार्थौ, तयोश्च प्राधान्येन साधनं धर्मः । तत्र साध्ययोरुभयोः, सुखदुःखाभावयोः तत्साधनभूतयोश्च प्रवृत्तिनिवृत्तिरूपयोर्धर्मयोरस्ति मानवेन सम्बन्धः । मानवमुद्दिश्यैव प्रवृत्तिनिवृत्तिरूपयोर्धर्मयोः, तत्साध्यभूतयोश्च सुखदुःखाभावरूपयोः पुरुषार्थयोः शास्त्रेण विधानात् । तदुक्तं ब्रह्मसूत्रशाङ्करभाष्ये भगवता शङ्कराचार्येण 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इति । सूत्रे

'शास्त्रं ह्यविशेषप्रवृत्तमपि मनुष्यानेवाधिकरोति शक्तत्वात्, अर्थित्वात्, अपर्युदस्तत्वात्, उपनयनादिशास्त्राच्च । इति । अधिकारलक्षणे जैमिनिनापि निरूपितमेतद् यत्-उपर्युक्तैः कारणैः शास्त्रे मानुषाणामेवाधिकारो नान्येषाम्, इति । अत एवोक्तं नीतिशास्त्रे—

**आहारनिद्राभयमैथुनञ्च**
**सामान्यमेतत्पशुभिर्नराणाम् ।**
**धर्मो हि तेषामधिको विशेषो**
**धर्मेण हीनाः पशुभिस्समानाः ॥**

तत्र मानवमात्राय सामान्यतः कर्त्तव्यत्वेनोपदिष्टा धर्मास्तु मनुनोक्ताः— यथा—

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥**

वर्णभेदेन तु श्रीमद्भगवद्गीतायां भगवतोपदिष्टाः । यथा—

**"शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥**
**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।**
**दानमीश्वरभावश्च क्षात्रं कर्म्म स्वभावजम् ॥**
**कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म्म स्वभावजम् ।**
**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥**

एते च धर्मा अनुष्ठीयमानाः सत्वशुद्धितत्त्वज्ञानादिद्वारा मोक्षं प्रति कारणतामुपयान्त्येव । अत उक्तं प्रशस्तपादभाष्ये—

"धर्मः पुरुषगुणः। कर्तुः प्रियहितमोक्षहेतुः, अतीन्द्रियोऽन्यसुखसंविज्ञानविरोधी पुरुषान्तःकरण-संयोगविशुद्धाभिसन्धिज वर्णाश्रमिणां प्रतिनियत-साधननिमित्तः। तस्य तु साधनानि श्रुतिस्मृतिविहितानि वर्णाश्रमिणां सामान्य-विशेष-भावेनावस्थितानि द्रव्य-गुणकर्माणि। तत्र सामान्यानि-धर्मः-श्रद्धा अहिंसा भूतहितत्वं सत्यवचनमस्तेयं ब्रह्मचर्य्य-मनुपधा क्रोधवर्जनमभिषेचनं, शुचिद्रव्यसेवनं विशिष्टदेवता-भक्तिरुपवासोऽप्रमादश्च इत्यादि।

गीतायामपि षोडशेऽध्याये 'अभयं सत्त्वसंशुद्धि-रित्यत आरभ्य' 'अद्रोहो नातिमानिता' इत्यन्तं दैवसम्पत्तिनिबन्धनान् धर्मानुपदिश्य 'दैवीसंपद्-विमोक्षाय' इदि वचनेन तेषां धर्माणां मोक्षहेतुत्वं प्रतिपादितम्।

एवञ्च श्रुति-स्मृतिप्रतिपादितरीत्या सुखदुःखा-भावयोस्तदुपायभूतानां धर्माणाञ्च सम्बन्धो मानवेन सिद्धस्तदा तत्प्रतिपादकस्य दर्शनशास्त्रस्य मानव-जीवनेनासम्बद्धता कथङ्कारं वक्तुं शक्यते। अपि च परमपुरुषार्थाधिगतिद्वारा मानवजीवनस्य परिपूर्ण-तापादनं दर्शनानामुद्देश्यं तदा तानि कथं मानवजीव नात् बहिर्भूतानि तदसम्बद्धानि वा कथयितुं शक्यन्ते।

अपि च मनःसंयमजन्याः—अणिमा, महिमा, गरिमा, लघिमा, प्राप्तिः, प्राकाम्यम्, ईशित्वं वशित्वम्, इत्यष्टौ योगबलसिद्धयः, इन्द्रियसंयमजन्या अतीतानागतज-न्मान्तरज्ञानादिसिद्धयः, हृदयसंयमजन्याः देवसाक्षा-त्कारछायापुरुषसिद्ध्यादिसिद्धयः, प्राणसंयमजन्याः काव्यव्यूहादिसिद्धयः, अन्या अपि योगदर्शनस्य विभूतिपादे प्रतिपादिताः सिद्धयश्च किं दर्शनेन न प्रतिपाद्यन्ते? मनइन्द्रियादिसंयमस्य दर्शनाङ्गत्वेन दर्शनशास्त्रस्यैव विषयत्वात्। एतासां च सर्वासां सिद्धीनां नास्ति किं मानवजीवनेन सम्बन्धः? किं वा एताभिः सिद्धिभिर्न प्राप्यते भौतिकी सिद्धिः? तर्हि कथ दर्शनस्य मानवजीवनासम्बद्धता प्रति-पादयितुं प्रभूयते? प्रतिदर्शनं प्रतिपादितस्याचारा-ङ्गस्य मानवजीवनेनैवास्ति सम्बन्धः। तेन च मानवजीवनस्योत्कर्षः परिपूर्णत्वं च जायते। अपि च प्रतिदर्शनं प्रतिपादितानां तत्त्वानामपि परिज्ञानेन भवति तेषां परिचयः तेष्वधिकारश्च मान स्य। तेन च कियान् मानवजीवनस्य लाभो व्यवहारेऽपीति नाविदितमाधुनिकानां वैज्ञानिकानाम्। अपि च दार्शनिकदृष्टिसंस्कृत एव मानवः सुखदुःखयोः, लाभालाभयोः, जयाजययोः, सिद्ध्यसिद्ध्योश्च समो भूत्वा लोकसंग्रहानुरोधेन सर्वजनहिताय कर्म कर्तुम्,

**अयं निजः परो वेति गणना लघुचेतसाम्।**
**उदारचरितानां तु वसुधैव कुटुम्बकम्॥**

इति अन्तर्राष्ट्रियतां विश्वबन्धुत्वं च स्थापयितुं प्रभवति। स एव च

**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः।**
**'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥'**

इत्युक्ती चरितार्थयन्, आत्मैवेदं सर्वम्', इति च जानन्

**'सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग् भवेद्'॥**

इत्याशास्ते नान्यत्। इति शम्।

### भीलवाड़ानगरे सम्पन्नस्य

## राजस्थान-प्रान्तीय-संस्कृत-सम्मेलनस्य

### द्वादशाधिवेशने

### साहित्यपरिषदः सभापतीनां

### जयपुर-महाराज-संस्कृत-कालेज-साहित्य-विभागाध्यक्षाणां

### साहित्याचार्यश्रीजगदीश-शर्म-महाभागानाम्

# अभिभाषणम्

**विरोधियुगलं यत्र निर्बाधकृतसंस्थिति ।**
**विद्या-विभूति-संस्थानं तं वन्दे पार्वतोप्रियम् ॥**
**यत्कृपालेशमासाद्य कवयो विश्ववन्द्यताम् ।**
**अमरत्वेन सम्प्रापुर्विचित्रं नौमि तन्महः ॥**

अयि ! संस्कृत-सम्मेलनस्य कर्णधाराः ! अध्यक्षमहाभागाः ! परोपकृतिसत्रैकगृहीतदक्षाः ! संस्कृतोद्धरणधुरन्धराः ! स्वागताध्यक्षाः ! नानागम-निगम-निकष-निशित-शेमुषीकाः विद्वत्तल्लजाः नीतिनदीष्णाः नेतारः सततरसास्वादनाधरीकृत-सुधारसाः नहि नैयायिकाः इव लक्षणान्तप्रसाराः, नहि वेदान्तिनः इव ब्रह्मानन्दोत्कृष्टानन्दानभिज्ञाः, योगिनोऽपि वियोगिनः, सप्रत्यया अपि अप्रत्ययाः, प्रत्याहार-परायणाः अपि अप्रत्याहारपरायणाः नीतिमन्तोऽप्यनीतिमन्तः शिवमूर्तयोऽप्यशिवमूर्तयः परिषदि समवेताः पञ्चजनाः !

महत्प्रमदास्पदमेतद् यदत्र भिल्लवाटे कथमपि कतिपयवर्षाणि नीत्वा भूयो भूयस्तया सङ्गता आनन्दचयमन्तरनुभवामः । तारुण्यविरहितया द्वादशवर्षदेशीयामिमामनुरञ्जयितुं, कथङ्कारमपि न प्रभवेद् अयं पुनरपि स्मृतिवचनमाचारविद्भिः सर्वथापालनीयमेवेति प्राचीना संस्कृतिरनुसृता साम्प्रतमपीत्यहो ।

क्वायं मेदपाटप्रदेशो वीरसूः ? क्व चेयं परिषत्? क्व चायं प्राकृतो जनस्तदपि परीचिक्षिषया दुर्वहधू-र्धारणासमर्थे युवराज इवातदर्हे मयि विन्यस्तोऽयं भारः समुत्साहयितुं महतामतिशयितप्रकृतेर्नाति-रिच्यते ।

अनादिकालप्रवर्त्तमानायामस्यां सृष्टावनाद्यनन्तस्य परब्रह्मणः इव कवेः सर्जनात्मक-प्रवृत्तिमत्त्वादुभ-योरभेदं प्रतिपादयति भगवती श्रुतिरपि 'कविर्मनीषी परिभूः स्वयम्भूः'' "तदैक्षत एकोऽहं बहुस्यां प्रजायेय"

इति च। अतएव च साहित्यिकाः सर्वेऽपि भावाः सत्कार्यविदामिव भसितान्तर्गतस्फुलिङ्गा इव जलधिलानपावक इवाव्यक्तरूपेण वटबीजन्यायेन वान्तर्निहितास्तत्र तत्र। एवं च स्वत एव साहित्यस्यानादित्वमापतति। किमिदं साहित्यं यस्यानादित्वमाख्यायते? तत्र सहभावः साहित्यम्। स च शब्दार्थयोरेव सम्भवति। तथा च राजशेखरः—शब्दार्थयोर्यथावत्सहभावेन विद्या साहित्यविद्या। विश्वकवी रवीन्द्रनाथमहोदयः—इयतवाऽपरितुष्यंल्लिखति यत् केवलं भावस्य भावेन भाषय भाषायाः ग्रन्थेन ग्रन्थस्य सम्बन्ध एव न साहित्यमपि तु मनुष्येण सह मनुष्यस्य वर्त्तमानस्यातीतेन विप्रकृष्टेन सन्निकटस्यात्यन्तिको यः आन्तरः सम्बन्धः स हि साहित्यमन्तरा न केनाप्युपपादयितुं शक्यः। एतेन साहित्यपदार्थः काव्यमिति सिध्यति। महाकविकालिदासेनाप्युक्तमेतदेव—

**"वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वती-परमेश्वरौ॥"**

माघकविनापि शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते—इत्यादिना शब्दार्थयोः सहभाव एव साहित्यमिति साधितम्। लक्षणानुसारिणी हि लक्षणव्यवस्था-इत्यनुसृत्यैवानन्तरभाविभिराचार्यैर्लक्षणानि व्यधायिषत। तत्र भामहः काव्यालङ्कारे "शब्दार्थसहितौ काव्यम्" मम्मटोऽपि "तददोषौ शब्दार्थौ" इत्यादि, महिमव्याख्यापि न च काव्ये शास्त्रादिवदर्थमात्रप्रतीत्यर्थं शब्दमात्रं प्रयुज्यते। सहितयोः शब्दार्थयोस्तत्र प्रयोगात्। साहित्यं तुल्यकक्षत्वेनान्यूनानतिरिक्तत्वम्।' इति

**"साहित्यमनयोः शोभाशालितां प्रति काऽप्यसौ**
**अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः॥"**

(वक्रोक्तिजीवितम्)

तत्र निर्दोष-शब्दार्थ-गुणवत्त्वे सति स्फुटम् इति अच्युतरायः। सहृदय-हृदयाह्लादिशब्दार्थमयत्वम् इति ध्वन्यालोककारः। चमत्कारि-शब्दार्थ-युगलसहभावमाश्रित्यैव तद्विशिष्टं काव्यं साहित्यशब्देन व्यवजह्रुः। अतएव च तदानीन्तनैराचार्यैर्निबद्धा ग्रन्था अपि तथाविधनामभिरेव प्रसिद्धाः। यथा—काव्यालङ्कारः, काव्यप्रकाशः, काव्यादर्शः—इत्यादयः। रुद्रटः—ननु शब्दार्थौ काव्यम्। काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्त्तते। भक्तकवितुलसीदासोऽपि शब्दार्थयोः सहभावं जलवीचिवदविच्छिन्नमेव मन्यते। इत्यादिभिः काव्यसाहित्ययोरभेदे सिद्धेऽपि सूक्ष्मेक्षिकया वेदादीन् षड्ङ्गसहितान् महाकाव्यानि चानुशीलयद्भिराचार्यैर्लक्ष्येषु विद्यमानानि तत्तद्वस्तूनि पर्यालोच्य व्यरच्यन्त लक्षणग्रन्थाः। यत्र काव्यरचनायाः कृते विविधा मार्गाः प्रदर्शिताः। तत्रापि यस्मै यद्वस्तु रोचते स्म तस्यैव प्राधान्यमादाय तेन तादृशः सम्प्रदायः प्रवर्त्तितः—अलङ्कारसम्प्रदायः, रीतिसम्प्रदायः, औचित्यसम्प्रदायो लक्ष्यभूतेषु वेदेषूपलभ्यते। यथा "द्वा सुपर्णा सयुजाः सखायः समानं वृक्षं परिषष्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति॥" रससम्प्रदायश्च। 'रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इत्यादि श्रुतिः "नहि जायायै

कामायै जाया प्रिया भवति; आत्मनस्तु कामाय जाया प्रिया भवति" इत्यादिश्रुतिशब्दोऽप्ययं 'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः— इति । भरतसूत्रम्, ध्वनिसम्प्रदायश्च रामायणमहाभारतमहाकाव्यादिषु तत्र तत्र विजृम्भमाणो वर्त्तत एव । तस्यैव प्रपञ्चो ध्वन्यालोककारेण कृतः ।

एवं लक्षणग्रन्थकारैः साहित्यशब्दः काव्याद्भिन्नप्रवृत्तिनिमित्तीकृतोऽतएव च ते साहित्यदर्पणः, साहित्यकौमुदी, साहित्यसारः इत्यादिनामभिः स्वकीयग्रन्थान् व्यवहृतवन्तः । परं केवलेषु लक्षणेषु सत्सु तेषां ग्रन्थानामान्वर्थक्यमेव नास्ति लक्ष्याणि विना, द्वयोरेव सत्त्वे तदुपत्तिः ।

हितेन सह वर्त्तते इति सहितं, सहितस्य भावः कर्म वा साहित्यम् । सहभावश्चाष्टादशविद्यानाम् । अतएवात्र कविकर्मणि सर्वा विद्याः परिसमाप्यन्ते; तथा चोक्तम्—

**"स्वस्याभिलाषादिव यत्र सर्वे**
**विद्याविलासा मिलिता लुठन्ति ।**
**तल्लोकवैदग्ध्यविधानयन्त्रं**
**साहित्यतन्त्रं कलयन्ति कल्याः ॥"**

अतएव काव्यमीमांसायां पञ्चमी साहित्यविद्या, सा हि चतसृणामपि विद्यानां निष्यन्दः' इति यायावरीयः । निष्यन्दश्च सार एव भवति । स हि सर्वापेक्षया उत्कृष्टः । स च चमत्कार एव । अतएव सर्वा विद्या अङ्गभूताः साहित्यञ्चाङ्गि । तथाहि— "शब्दार्थयोःशक्तिविशेषसत्त्वे लक्ष्येषु काव्यव्यवहारयोगात् । न्यायादिवद् दर्शनकोटिमाप्तं साहित्यमङ्गीति वदन्ति विज्ञाः" इति हेतोर्यथा चैतन्ये निर्गते शरीरं शव इत्येवोच्यते, एवमेव सारभूतसाहित्यमन्तरेण सर्वा विद्या निष्फला एव । निष्यन्दभूतत्वात् सर्वं वाङ्मयमत्र समाविष्टम् । अतएव भोजेन वाङ्मयं षोढा प्रदर्शितम्—

**काव्यं शास्त्रेतिहासौ च काव्यशास्त्रं तथैव च ।**
**काव्येतिहासः शास्त्रेतिहासस्तदपि षड्विधम् ॥"**

सहितस्य भावः साहित्यम्-इति व्युत्पत्या ज्ञानराशिरपि साहित्यशब्देन वक्तुं शक्यते; अतएव आचार्यमहावीरद्विवेदेन चिरसञ्चितो ज्ञानराशिरेव साहित्यशब्देन प्रतिपादितः । अस्मिन्नर्थे साहित्यशब्दस्य प्रयोगो जगदीशेन श्राद्धविवेककारेण च विहितस्तथाहि "तुल्यवदेकक्रियान्वयित्वं बुद्धिविशेषविषयित्वं साहित्यम्"; "परस्परसापेक्षाणां तुल्यरूपाणां युगपदेव क्रियान्वयित्वं साहित्यम्" । इति । हितेन रसेन सह वर्त्तते तस्य भावः साहित्यम् एतेन रसविशिष्टं साहित्यमिति सिद्ध्यति 'रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति, आनन्दं वै ब्रह्मणो रूपम् इत्यादि श्रुतिबलात् ब्रह्मरूपतावाप्तेः चरमपुमर्थसाधनमपि साहित्यम् । अतएव पण्डितराजोऽपि रसस्वरूपनिरूपणावसरे निगदति "रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रसः । "रसे सारश्चमत्कारः सर्वत्रैवानुभूयते" इत्यादिना च रसस्यैव चैतन्यमापादितम् । चैतन्यमन्तरा शरीरस्य तदङ्गानां च निष्क्रयत्वमित्थमेवाङ्गीभूतं साहित्यमन्तरा सर्वासामपि विद्यानां निस्सारतया निष्प्राणत्वम् । सूक्ष्मेक्षिकया निभालयद्भिर्विवेकिभिस्तत्र

तत्र लक्ष्येषु विद्यमानानि तत्त्वानि उपलभ्य तदुपज्ञतया स्वकीयाः सम्प्रदायाः प्रवर्तिताः। तत्र रससम्प्रदायप्रवर्त्तको महामुनिर्भरत एव । तथा च नाट्यशास्त्रम्—"न हि रसादृते कश्चिदर्थः प्रवर्त्तते" इति। तमेवानुसृतवान् अग्निपुराणकारोऽपि—वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्" इति। शब्दार्थौ ते शरीरम्, रस आत्मा" इति राजशेखरः।

अलङ्कारादिसम्प्रदायप्रवर्त्तकाः मुख्यतयाऽलङ्कारदीनामात्मत्त्वमभ्युपगम्यापि रसस्यैव महत्त्वं प्रतिपादयन्ति। तथा हि—"रसवद्दर्शितस्पष्टशृङ्गारादि रसं यथा" इति भामहः।

**"मधुरे रसवद्वाचि वस्तुन्यपि रसस्थितिः"**

इति दण्डी

**"दीप्तिरसत्वं कान्तिः"** इति वामनः।

**"निरन्तररसोत्गारगर्भसौन्दर्यनिर्भराः।**
**गिरः कवीनां जीवन्ति न कथामात्रमाश्रिताः॥"**

इति कुन्तकश्च।

ध्वनिसम्प्रदायः—ध्वनिसम्प्रदायप्रवर्त्तकाः केचिदाचार्या अभूवन्—इति ध्वनिकारः स्वयं ब्रवीति ध्वनिस्वरूपप्रतिपादनप्रतिज्ञावसरे "काव्यस्यात्मा ध्वनिरितिबुधैर्यः समाम्नातपूर्वः" इत्यादिना। अत्र केचित् काव्यार्थतत्त्वपराङ्मुखा व्याकरणानुरागिणो बुधशब्दस्य वैयाकरणरूपमर्थम् विदधाना भ्रान्ता एव। आलोककारेण तादृशभ्रमनिरासार्थं "बुधैः काव्यतत्त्वविद्भिः" इति व्याख्यातम् तथाविधा एव च ध्वनिसम्प्रदायप्रवर्त्तकतया वैयाकरणान् प्रदर्शयन्ति। साहित्यमपि चान्तर्भावयन्ति व्याकरणे। मन्यन्ते हि केचन सर्वर्थान्तर्भावयितुमशक्ता व्याकरणस्यैव पुच्छभूतमिदं शास्त्रम्।

मान्याः,

केवलं प्रयोगसाधुत्वपरे पदपदार्थबोधकतयाभिमते शास्त्रे कथमन्तर्भावः सम्भाव्यते समीक्षाप्रधानस्य साधुशब्दानामपि औचित्यानौचित्यविधयोपादानानुपादानादिबोधकस्य शास्त्रस्य।

अथ शब्दानुशासनम्। अथ गौरित्यत्र कः शब्दः इति विचारे पक्षान्तरे प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते। ध्वनिं कुर्वन्नेवमुच्यते तस्माद् ध्वनिः 'शब्दः' इति। केवलं पस्पशायां महाभाष्यस्य ध्वनिपदमवलोक्यैव व्याकरणान्तःपातितास्य शास्त्रस्य समुदीरिता तत्रैष दिवावधातव्यम्। शब्दमात्रकथने न किमपि सम्पद्यते यावन्न तन्निरूपणे श्रेयः सर्वस्वं प्रदत्तं स्यात्। व्याकरणादिषु शास्त्रेषु प्रयुक्ता एव शब्दाः परन्न तैरेव येषां केषामपि चरितार्थता कर्त्तुम् शक्यते। अपि तु श्लाघ्यतमो विदुषामपि विस्मयावहः कश्चन विषयो प्रतिभाप्रभावितवैभवैयैराचार्यैर्लक्षणैः सलक्ष्यभेदोपभेदैः प्रदर्श्य संस्थापितस्ते हि तादृशस्य गूढ़तमस्य विषयस्योपद्रष्टारः, ईदृशस्य ध्वनेः प्रतिपादकस्य शास्त्रस्य कथमन्तर्भूतिः ? साहित्यस्य शास्त्रान्तरान्तःपातिता न शक्यते कर्त्तुमपि तु सर्वा अपि विद्या अहमहमिकयोपस्कुर्वन्तीदम्। तथा च राजशेखरः—श्रुतिः, स्मृतिः, पुराणम्, इतिहासः, प्रमाणविद्या, समयविद्या राजसिद्धान्तत्रयी। लोकोविरचना प्रकीर्णकं चैभिर्द्वादशभिरुपस्क्रियते। उपविद्यास्तु चतुःषष्टिः, ताश्च कला इति विदग्ध-

वादः। स आजीवः काव्यस्य साहित्यं सर्वत्र ब्रह्मेव व्याप्तमस्ति। न हि किमपि एतेन विहीनम् एतेन विहीनो देशः शव एवेति हिन्दी कविनोक्तम्—

**"अन्धकार है वहाँ जहाँ आदित्य नहीं।**
**है वह मुर्दा देश जहां साहित्य नहीं।।"**

साहित्यस्य सर्वव्यापित्वादेव भर्तृहरिस्तद्विरहितं साक्षात् पशुमेव मन्यते—

**साहित्यसङ्गीतकलाविहीनः।**
**साक्षात् पशुः पुच्छविषाणहीनः।।**इति।।

साहित्यसंगीतकलानामविच्छिन्नः सम्बन्धः— लौकिकं संगीतमपि साहित्यसम्पन्नम्। यथा—

**"रतन कुवो मुख साँकडो जीमें लम्बी आवे नेज,**
**तेल गयो गुडल्यो गयो गयो भँवर को तेज"।।**

एतमाश्रित्यैव कालिदासोऽपि "अनाविद्धं रत्नम्" इति स्मरति—

परम्परया काव्य-कारणतया लोकवृत्तस्य। चतुःषष्टिकलानां निरूपणमौपनिषदाधिकरणे तत्र चतुःषष्टिकलासु कामकला परिगणिता, सापि साहित्यस्य मुख्यमङ्गम्। तामन्तरा परिहसनीयाः सर्वे वैदिका इव। एतज्ज्ञानाभावेनैव केनापि वैदिकेनोक्तं स्वस्त्रियं प्रति "सामगायनपूतं मे नोच्छिष्टमधरं कुरु। उत्कण्ठितासि चेद् भद्रे वामं कर्णं दशस्व मे" इति।

किमियमुक्तिरुचिताविर्भूतमन्मथविकारायाः षोड़शवार्षिक्याः कृते? स हि साहित्यगन्धघ्रातो यदि स्यात्तर्हि कामसन्तप्तायास्तस्याः कृते कीदृशीं रसमयीं धारां प्रवाहयेत्? अन्यत् किं, साक्षात् शङ्करावतारः श्रीशङ्कराचार्योऽपि प्राक्तनवैरितां स्मरन् स्मरशास्त्रपराङ्मुखो जन्मत एवाभवत्। परं स्वल्पीयसि वयसि परलोकं जिगमिषुरपि समस्तानपि विदुषः स्वकीयवैदुष्येणावाङ्मुखान् कुर्वाणस्तच्छास्त्रानभिज्ञतया भारत्या विजितः स्वीयाज्ञानतां प्रकाशयंस्तदधिगतये शरीरान्तरप्रवेशमङ्गीकृतवान्।

प्रवृत्तिमूलकानि हि निवृत्तिशास्त्राणि। प्रवृत्तिमन्तरा निवृत्तिनिर्वहणाभावात्। तृतीयपुमर्थं यावदभिलषितं निषेव्य चरमपुमर्थं प्रतिपद्यते परमार्थतः। न च काव्यानामसद्वृत्तनिबन्धतयाऽनुपादेयत्वमुद्घोषितम् 'काव्यालापांश्च वर्जयेत्" रण्डागीतानि काव्यानीति प्रवादैरितिवाच्यम्।

"चिड़िए तनें चांवलिया भावे। घर की नार सरूप भंवरजी नें पराई भावे" इत्यादिभी रण्डागीतैरुपदिश्यमानत्वाच्छास्त्रानभिज्ञानां रसिकानाम्। 'काव्यालापांश्च वर्जयेत्' इति प्रतिवचः प्रतिपादनार्हाः कथयन्ति केवलशृङ्गारप्रधानविषयककाव्यमुद्दिश्योक्तिरिति। परमत्रापि विप्रतिपत्तिग्रस्तचेताः अयं न पारयते सोढुमेतदपि।

वेदानां पौरुषेयत्वमपौरुषेयत्वं वा स्यान्नात्रास्माकं प्रामाण्ये विवादः। परं निर्बन्धमपहाय विचारे क्रियमाणेऽश्वमेधीयप्रकरणस्य काव्यालापेभ्योऽप्यधिकाश्लीलवत्तयाऽप्रामाण्यं प्रजापतिः स्वां दुहितरमकामयत, श्रुतेरस्याप्रामाण्यं कथन्नोदीरयन्ति भवन्तः? किमपराद्धन्नः काव्यालापैर्यत्तेषां सर्वथा परित्याग एव विधीयते चाण्डालस्पर्शदूषितानामिव।

अन्यच्चैतेषां प्रामाण्यविषये "काव्यालापाश्च ये केचिद् गीतकान्यखिलानि च। शब्दमूर्तिधरस्यैते

विष्णोरंशा महात्मनः ।"

एवमेकतः काव्यालापानां विष्णोरंशत्वमपरतश्च शुनः शेफ इव परित्यागः । उभयत्तः पाशारज्जौ समापतितायामात्मतुष्टिरेव साहित्यविदामलङ्कारः समाश्रयणीयः ।

पाश्चात्यानामर्वाचीनानां हिन्दीसाहित्यविदामपि साहित्यविषयका विचारा निर्दिश्यन्ते, पाश्चात्य विद्वद्भिरपि भारतीयैरिव साहित्यस्य काव्यस्य वा नानाविधानि लक्षणानि निर्दिष्टानि । तत्र च साहित्यस्य विभिन्नानां वैशिष्ट्यानां चर्चाऽनुष्ठिता । अस्मिन् विषये समालोचकप्रवरो मैथ्यूआॅर्नल्ड-महोदयः साहित्यं जीवनस्यालोचनां मनुते । हैड-सनमहानुभावश्च तत् भाषाया माध्यमेन जीवनाभिव्यक्तिप्रदायकं मन्यते ।

हिन्दीभाषायाः कतिपयविद्वद्भिरपि काव्य-साहित्ययोर्भिन्नत्वापादकाः प्रयोगाः कृताः—काव्य-शब्दस्य स एवार्थो यः साहित्यस्य वास्तविकोऽर्थः इति श्यामसुन्दरः। साहित्यशब्दः सर्वस्यापि वाङ्मयस्य द्योतकः । वाचो यावान् प्रसारः स सर्वोऽपि साहित्यान्तर्गत एव इति–गुलाबरायश्च काव्यं साहित्य-युतात्मानुभूतीनां नित्यं नवं नवं रहस्यमुद्भेदयति आत्मनो वाङ्मनसप्राणमयत्वात् इति जय-शङ्करप्रसादः, साहित्ये मानवस्य बुद्धिभावनयोरेवं सम्मिश्रणं जायते यथाऽऽतपच्छायवस्त्रे द्विवर्णमयास्तन्तवो ये स्वस्ववैशिष्ट्येन स्ववर्णातिरिक्तमेकं तृतीयं वर्णं जनयन्ति । अस्माकं मनोवृत्तीनामेवं-विधसामञ्जस्यपूर्णमैक्यं साहित्यादन्यत्रासम्भवि । तदर्थमस्माभिर्न त्याज्यमान्तरं जगत् न बाह्यं सम्पूर्णजीवनस्य तद्विषयत्वात् इति महादेवी । आत्माभिव्यक्तिरेव मूलतत्त्वं यस्य हेतोः कापि व्यक्तिः साहित्यकर्त्री रचना च तदीया साहित्यम् ॥ डॉ. नगेन्द्रः ।

उपर्युक्तैः कैश्चिदुदाहरणैः काव्यसाहित्ययोर्भेदाभेदौ स्पष्टं प्रतीयेते । डॉ. श्यामसुन्दरदास-जयशङ्करप्रसाद–महादेवी–नगेन्द्रमहोदयैः साहित्य-शब्दः काव्यद्योतकतयोपात्तः । कुन्तक-राजशेखर-गुलाबरायादिभिः साहित्यशब्दप्रयोगः काव्येतरार्थे कृतः ।

साहित्यस्याभ्युन्नतेरुपायाः—

(१) प्राचीनानां काव्यानां तदितरग्रन्थानां च प्रकाशनम् ।

(२) गवेषणापूर्णानां ग्रन्थानां प्रणयनम् ।

(३) आंग्लभाषाविद्भिः प्रकाशितानां भारतीय-साहित्यविषयकग्रन्थानां संस्कृतेऽनुवादः, तेषां प्रकाशनञ्च ।

(४) नवीनसाहित्यिकरचनायै प्रोत्साहनं विदुषाम् ।

(५) अध्ययनाय व्युत्पन्नेभ्यश्छात्रेभ्यो विशिष्ट-वृत्तिदानम् ।

सदस्यबन्धवः, इमां पञ्चसूत्रीं कार्यरूपेण भारतीयपंचशैलीसिद्धान्तवत् प्रतिकोणं प्रसारयत येन भगवतः साहित्यपुरुषस्य कीर्तिपताका सर्वत्र दोधूयेत ।





# राजस्थान-संस्कृत-साहित्यस्य भीलवाड़ा-नगरे आयोजिते द्वादशाधिवेशने आयुर्वेद-परिषदोऽध्यक्षस्य राजवैद्यस्य श्रीप्रेमशंकर-शर्मणोऽध्यक्षीयभाषणम्

(अनुवादकः—हरिहरस्त्रिवेदी)

सम्माननीयाः विद्वद्वराः, सज्जनाः, देव्यश्च,

गतहायने सरदारशहरनामधेये नगरे सम्पन्नस्य राजस्थान-संस्कृत-साहित्य-सम्मेलनस्याधिवेशने अन्याभिः परिषद्भिः सार्धमायुर्वेदपरिषदोऽप्यायोजनं निश्चित्य नवीनैव परम्परा स्थापिताऽऽसीत्; अधुना च प्रादेशिक-संस्कृत-साहित्य-सम्मेलनावसरे ऽस्मिन्विकासोन्मुखे भीलवाड़ा-नगरे आयुर्वेद-परिषदोऽप्यायोजनं विधाय, सत्स्वप्यधिकज्ञानवत्सु वयोवृद्धेषु चास्याः परिषदोऽध्यक्षतां कर्तुमहमादिष्ट; तस्माच्च 'आज्ञा गुरूणामविचारणीये'तिवाक्याद्भवदाज्ञानुवर्ती अस्मिन्नेवोपयुक्तेऽवसरे आयुर्वेद-शास्त्रस्य सामयिकासु चर्चासु भवतां चेतः आक्रष्टुं प्रयते।

एतन्निवेदयतश्च मे सञ्जायते महानामोदो यदस्मिन्प्रदेशे संस्कृतसाहित्यस्य प्रगत्यैव सममायुर्वेद-चिकित्साविज्ञानशाखिनो विकासार्थं बीजारोपणं प्रभूतसमयपूर्वमेव विहितमासीत्, अथ च दिवं प्रस्थितानां श्रीलच्छीरामनामधेयानां, राजवैद्यानां श्रीनन्दकिशोरमहोदयानामन्येषां च विदुषां प्रयत्नैरायुर्वेदमहाविद्यालयस्य पृथक् स्थितिरिति प्रदेशेऽस्मिन्नायुर्वेदविकासार्थं गुरुतरः पदक्रमः।

संस्कृतसाहित्यस्य विकासेन सार्धमायुर्वेदविज्ञानस्य विकासायास्मत्प्रदेशे द्वितीयतृतीययोर्योजनयोर्या द्रव्यराशिः स्वीकृता, सा नाल्पीयस्यन्यदीयप्रदेश-स्वीकृतधनराशेः। राजस्थानस्य मुख्यमन्त्रिमहोदयः सुखाड़ियेत्युपाह्वः श्रीमोहनलाल-नामधेयः प्रथमत एवायुर्वेदचिकित्साविज्ञानस्य स्तरमुन्नेतुमुद्यतते; तदर्थं च तेनात्र प्रदेशे 'आयुर्वेदमन्त्रालयो'ऽपि पृथगेव स्थापितः ; निर्देशेन चास्य सञ्चालनालयः आयुर्वेदे सततं प्रगतिं कुर्वन्नास्ते। द्वितीयस्यां तृतीयायां च पञ्चवर्षीययोजनायामस्मत्सौभाग्यात् आयुर्वेद-शिक्षा-चिकित्सानुसन्धानौषधनिर्माणादि-कार्यार्थं द्विनवतिरूप्यकपरिमितो व्ययो भविष्यति चतुर्थपञ्चवर्षीययोजनायां च प्रायशः पञ्चसप्तत्य-धिककोटिरूप्यकपरिमितो धनराशिः प्रस्तुतः, येन प्रतित्रिग्रामपञ्चसमितिशासितवर्गे एक आयुर्वेदचिकित्सालयः स्यात्। एषा च योजनाधुना विचाराधीना वर्तते।

राजस्थानप्रदेशे विभिन्नमण्डलेष्विदानीं तत्त्व-मुनिवेदमेदिनीसंख्याकाः (१३७५) औषधालयाः

सन्ति । जनानां चाकर्षणमायुर्वेदे परिवर्धमानं दृश्यते, तत्परिणामतश्च सर्वेषां सहयोगेन प्रायः लक्षषष्टिरूप्यकव्ययेन भवनानि निर्मितान्यासन् । तथाप्यधुना विकासस्यारम्भ एव, यतः सार्वजनीन-स्वास्थ्यसंरक्षणयोग्यस्य विभिन्नाङ्गानां च चिकित्सार्थमनिवार्यस्य ज्ञानस्य पूर्णा व्यवस्थाद्यापि न सम्पद्यते । राज्यशासनस्यात्रोपेक्षा, तथैव च मिथो विवदतां वैद्यानां च निष्क्रियतेत्येक एवात्र हेतुः ।

प्रदेशेऽस्मिन्नायुर्वेदपाठ्यक्रमः प्रायो दशवर्षपूर्वमारभ्यत, तन्निष्णाताश्च स्नातका विभिन्नेषु प्रदेशेषु महतीं प्रतिष्ठां चिकित्साकार्ये च कौशल्यमाप्नुवन्ति, तथापि पाठ्यक्रमेऽङ्गानां, प्रसूतेः, कौमारभृत्यस्य, तथैव चाधुनिकविज्ञानेन विकसितस्य रोगनिदानस्य प्रणालीनां ज्ञानं परिपूर्णताऽऽकांक्ष्यत एव । पाठ्यक्रमे निर्धारणे च प्रलम्बेनापि समयेन विदुषां न मतैक्यम्; यत्र-तत्र चाधुनिकविषयनिवेशः, यत्परिणामतोऽखिलस्यापि पाठ्यक्रमस्य दशमभाग-एवायुर्वेदोऽवशिष्यते । अन्यत्र च विदेशीयशिक्षा-प्रणाल्याः (Allopathy) ज्ञानस्य नाममात्रम्; कुत्रचिच्चाध्ययनाध्यापनप्रणाली प्राचीनग्रन्थानेवानुसृत्य भवत्विति चाकर्ण्यते । दुर्भाग्येन च पाठ्यक्रमे शुद्धाशुद्धशब्दानामभिनिवेश आरब्धः । प्रभविष्णूनां विदुषां च विचाराननुसृत्य द्विविधः पाठ्यक्रमः राज्यसमक्षं प्रस्तुतः; राज्येन च शुद्धायुर्वेदपाठ्यक्रम एव प्रशस्तः, यस्य समस्तेऽपि देशे संचालनकार्यं विभिन्नेषु प्रादेशिकराज्येष्वधुना विचाराधीनम् । सर्वानुमतः पाठ्यक्रमश्च तस्य प्रगत्यै प्रचलितो भवेदिति दृष्ट्या चायुर्वेदविज्ञानस्य कृते संक्रमणकाल एवाधुना । एकत्र शरीरस्य, शल्य-शाक्यस्य, प्रसूतेः, कौमारभृत्यप्रभृतीनां च विकसितं ज्ञानमाधुनिके चिकित्साविज्ञाने न स्यादित्याग्रहः, अन्यत्र तु संसारस्य कस्मादपि प्रदेशात् लोकहितावहस्य शल्यचिकित्साविज्ञानस्य ज्ञानं प्राप्य विज्ञानस्यास्य कलेवरवृद्ध्यै स्पष्टः संकेतो दृश्यते । अस्यां स्थितौ केनापि राज्यादेशेन राजनैतिकदृष्टिकोणेन वा विज्ञानस्य विकासं वर्धयितुं प्रत्यूहः कश्चनोपस्थाप्य इति तु सुतरां विचारार्हो विषयः ।

इतिहासे दृष्टिपातेन स्पष्टमवगम्यते यत् संसारे प्राचीनतमा चिकित्साप्रणाली आयुर्वेदचिकित्साविज्ञानमेव; सा च काले काले परिवर्तमाना विकासं च प्राप्तान्सिद्धान्तानाश्रित्य, 'यूनानी', 'नेचरोपेथी' 'ब्रोमोपेथी', 'होमियोपेथी' चेति विविधरूपेण नामान्तरिताऽभूत् । आयुर्वेदचिकित्साविज्ञाने प्रदर्शिताः 'प्लास्टिक-सर्जरी'-प्रभृतयश्चिकित्साप्रक्रिया निखिलस्य संसारस्य वैज्ञानिकानां मनसि 'सुवृहद् ज्ञानमायुर्वेदचिकित्सा विज्ञानादेव मूलरूपेणाधिगतमि'ति सन्देहमुत्पादयन्ति । आयुर्वेदचिकित्साविज्ञाने खनिजद्रव्याणां नवीनेनैव प्रकारेणानन्तरमेव समावेशः, अस्य च चिकित्साविज्ञानस्याधुना आयुर्वेदस्य मौलिकसिद्धान्तानामेवाधारेण विधीयते ।

अस्यां चावस्थायां स्वार्थदृष्ट्यायुर्वेदचिकित्साविज्ञानस्य स्वानुकूलीकरणमवैदग्ध्यमेव स्यात् । पक्षविपक्षयोराग्रहं निरस्य, सुविमृश्य चैतद्विज्ञानं प्रगतिपथं न नीयते चेत्तदाऽस्मद्वंश्या अस्माकमविवेकमुद्घोषयन्तो नः आयुर्वेदचिकित्साविज्ञानस्या-

वनतिप्रवर्तकान् मंस्यन्ते । आयुवदचिकित्साविज्ञानस्य समुन्नतिः कथं स्यादिति देशस्य सर्वेषामायुर्वेदविदां संस्कृतज्ञानां च कर्त्तव्यमित्यस्मिन्नवसरे स्पष्ट-निवेदनमुचितं मन्ये । यथा संस्कृतभाषा तथैव च चिकित्साविज्ञानरूपेणायुर्वेदशास्त्रमेवेतादृशं विज्ञानं यन्मौलिकरूपेणोन्नीयान्यदेशानां समक्षं नवीनमादर्श-मुपस्थापयितुं वयं शक्नुम इत्यस्माकं मुख्यमन्त्रि-महोदयैः समये समयेऽभिव्यक्तमेव । अस्या एव विचारधारायाः शुभः परिणामो यद्राजस्थानस्य मुख्यमन्त्रिमहोदयानामनेन सुदृढ़विचारेण, एवमेव च राजस्थानस्य राज्यपालानां श्री सम्पूर्णानन्द-महोदयानां सत्प्रेरणयास्मिन्प्रदेशे संस्कृताध्ययना-ध्यापनार्थम् संस्कृतविश्वविद्यालयस्य कल्पना-त्वरितमेव मूर्तरूपं गृह्णाति ।

अस्मिन्नवसरे चायुर्वेदपरिषद आयोजनेन स्पष्टमेवैतत् यत्संस्कृतसाहित्यार्णवकर्णधारास्तदंग-भूतानामायुर्वेदज्योतिषप्रभृतीनां विषयाणामुन्नत्यैव संस्कृतसाहित्यस्य प्रतिष्ठावृद्धि'रिति मन्यन्ते ।

आत्मकरणीयमिति मत्वा, चिकित्साशास्त्रं वर्द्धयितुं कस्मिन्नपि क्रमे च समाविष्टं ज्ञानमाप्नोतुं सर्वैरपि वैद्यबान्धवैरवश्यं प्रयत्नः करणीय इति चास्मिन्नवसरे निवेदनं कर्तुमीहे । आयुर्वेदचिकि-त्साविज्ञानं तथा वृद्धिं नेयं:, तथा चास्य विज्ञानस्य विविधानामपि शाखानां पूर्तिः करणीया यथ। नगरेषु ग्रामेषु वास्माकमेतच्छास्त्रं समुचितां प्रतिष्ठामावहेत् । सत्यं शिवं सुन्दरम् ।



# सुखाड़ियामहोदयः संस्कृतोदयश्च

**मूल-लेखक—रघुवीर चतुर्वेदी**

**(अनुवादकः—अमीरचन्द्र शास्त्री)**

राष्ट्रं राष्ट्रियतां च, संस्कृतिं साहित्यं च प्रति प्रीतिर्नीतिरिव परिवर्तिनी न भवति । नापि सा नित्यं नवनवं वेषं परिधाय नूतननूतनानि रूपाण्या-कलयति । सा तु पुरुषे परम्परागतानां संस्काराणां परिणत्यैव समुत्पद्यते । ते च संस्कारा एतादृशीनामेव भावनानां पृष्ठभूमौ वातावरणे वा परिष्क्रियन्ते । ये संस्कारा भौतिकतयाऽवसरवादितया वा प्रभाविता न भवन्ति, अपितु गुप्तगङ्गास्रोतांसीव निरन्तरया गत्याऽस्तित्वं भजन्ते । समयस्य युगस्य वा चाक-चक्ये ते विवशा इव तिष्ठन्तु नाम, प्राप्तावसरास्तु स्वकीयं प्रभावं प्रदर्शयन्त्येव ।

राजस्थानराज्यस्य मुख्यमन्त्रिणः श्रीमोहनलाल सुखाड़ियामहोदयस्य त एव संस्कारा अत्र राज्ये संस्कृतसंस्कृत्योः परिरक्षणे, विकासे, प्रसारे च सहाया समभूवन् ।

प्रदेशस्याभ्युदये, अत्रत्ये जनजीवने, तत्सम्ब-न्धिनि कार्यकलापे च सुखाड़ियामहोदयः कियत् साफल्यमाकलयदिति प्रश्नमेकस्मै क्षणाय चेत्परित्य-जामः तथापीदं तावन्निश्चप्रचम्, यथा शासनस्यो-च्चतमेऽधिकारिणि प्रदेशस्योदयानुदयौ सन्निहितौ

भवतः। राजस्थानस्य स्वाधीनतालाभानन्तरभवेतिवृत्ते यदा कदापि सुखाड़ियाशासनस्य कार्यकलापैः सम्बद्धः परिच्छेदो लेखिष्यते, तदेदं निश्चितं यत्कालान्तरापेक्षहा सुखाड़ियाकालः संस्कृतशिक्षाप्रचारप्रसारदृष्ट्या सर्वोत्तमः कालो गणयिष्यते।

अस्मिन् भौतिके उपयोगिताप्रधाने च युगे यत्र सुखं जीवितुं साधनान्यहमहमिकया संगृह्यमाणानि सन्ति, यत्र संस्कृतस्य संस्कृतेश्च चर्चा विवशीकृता अपि जनाः श्रोतुं न कामयन्ते, तत्र स्वयमेव प्रवृत्तिस्तावद्दूरे आस्ताम्, व्यक्त्यन्तरः क्रियमाणाऽपि प्रवृत्तिर्वृथा वाऽपव्ययहेतुर्वा मत्वा जनैरुपेक्षिता भवति। ये पाश्चात्यसभ्यताया भौतिकानां च सुखानां तुलनायां क्षणिकस्य स्वजीवनस्य निर्मूलसत्तायाः प्रभावे तत्साहित्यं तां च भाषां विस्मरन्ति, ययोः पारम्पर्यागतं क्रमं कश्चिदपि कस्मिंश्चिदपि युगे निरसितुं न प्राभवत्।

सौभाग्येन राजस्थानमस्य कालकोपस्य पात्रतां नागच्छत्, संघर्षेष्वपि गतया दशाब्द्या निरन्तरं संस्कृतशिक्षायाः प्रसारणे चाग्रणीरतिष्ठत्। लेखान्तरेष्वस्या दशाब्द्या लेखोल्लेखः प्रस्तुतोऽस्ति।

राज्यस्य मुख्यमन्त्रिणः सुखाड़ियामहोदयस्य जन्म पुण्यभूमौ नाथद्वारायामभूत्। तस्यामेव धर्मभूमौ तदीयाः संस्कारा आविरभवन्, येऽद्यावधि तज्जीवने स्थायितामादधाना अनुभूयन्ते। स्वकीये संघर्षमये जीवने, राजनैतिकीषु, प्राशासनिकीषु चानेकासु समस्यासु व्यस्तस्य तस्य साक्षात् संस्कृतभाषायाः कस्मिंश्चिदपि कार्यक्रमे किमपि निर्देष्टुमवसरो नाभवत्। परमिदं सत्यम्, यद् यथा राजस्थाने राजकीयस्तरे यत्किञ्चित् संस्कृतशिक्षाप्रसारकार्यं सम्पन्नम्, तत्केवलं श्रीमोहनलाल सुखाड़ियामहोदस्य संस्कृतं प्रति स्वीयस्य प्रेम्णः, तदीयेन प्रेम्णः, तदीयेन प्राशासनिकेनोदारेण च दृष्टिकोणेनैव सम्पन्नमस्ति। स्वयं संस्कृतानुगामिभिरेव आङ्गलीय-भौतिकतातुलायां सन्तुलयद्भिर्विद्वद्भिरेव वेति।'

गतेष्वब्देषु संस्कृतशिक्षाया निरीक्षणावेक्षणार्थं भिन्नो विभागः समस्थाप्यत, विदुषाम् आर्थिकं साहाय्यं, छात्राणामध्ययनाय शिक्षकाणामध्यापनाय चानेकानि सौविध्यानि पर्यकलयन्त। अतीतायां दशाब्द्यां जातायाः संस्कृतभाषाप्रगतेर्लेखोल्लेखं मूल्याङ्कनं च परित्यक्तवतामपि द्वे वार्ते स्थूलतया विदिते एव वर्तेते—

**पूर्वा—सुखाड़ियाद्वारा संस्कृतं न जुगुप्सितम्।**
**भौतिकप्रतियोगेऽपि न तेन तदुपेक्षितम्॥**
**अपरा— चोपयोगित्ववादपूर्णे युगेऽप्यहो।**
**राजनैतिकसंघर्षे संस्कृतं तेन रक्षितम्॥**

यदा यदा संस्कृताभ्युदयाय कश्चन प्रस्तावः समुपस्थितः, अथवा तदस्तित्वाय भयमुपागतम्, तदा तदा तेन महानुभावेन प्रस्तावाः स्वयं सहर्षमुररीकृताः। संस्कृतभाषाया रक्षकतया प्रहरितया च तदर्थमयं महोदयोऽयुध्यत, आधुनिकेन च चाकचक्येन प्रभावितानां, प्रतिवस्तुकमुपयोगदृशा तोलयतां च जनानां साम्मुख्यं विहितम्। संस्कृतभाषायाः सम्बन्धे सदैवोदारतया व्यवहृतम्। स्वकीयं प्रशासनमपि संस्कृतं प्रत्युदारतया व्यवहर्तुं प्रेरितम्, प्रशासका नूनमुदारीकृताः।

अतीतायां दशाब्द्यां संस्कृतं प्रदेशे प्रवृद्धम्, अद्य वयं तच्चर्चां कर्तुमर्हामः। तस्य न्यूनतां वयमालोचयामः। तां सुरक्षिताम्, अग्रेसरां च कर्तुं दृढानुपायान् विचारयामः। वयं संस्कृतस्य प्रतिकार्यम् उदारस्य शासनस्य सहयोगं प्राप्नुमः, इयमेव सुखाड़ियाशासनस्योदारता, अस्मत्संस्कृतिक्षेत्रे चोपलब्धिश्च विद्यते।



भीलवाड़ा-नगरे सम्भूतस्य राजस्थान-संस्कृत-सम्मेलनस्यावसरे

# साहित्य-परिषद् उद्घाटनभाषणम्

उद्घाटकाः—श्री गिरिधरलाल शास्त्रिणः

अयि सुरभारती समुपासका अध्यक्षमहोदयाः श्रीलक्ष्मीलालजोशीमहाभागाः, समुपस्थिता मान्य-विद्वांसो वागीश्वरीभक्ताश्च,

महत्प्रमोदास्पदमेतद्यदत्र सुपरिचिते भिल्लवाट-नगरे भूयोऽपि संस्कृत-साहित्य-सम्मेलन सम्पादन-समुत्साहः समजायत चन्द्रशेखरसुहृदां हृदि। तदुपलक्ष्यैव च वाग्युद्धप्रवीणाः प्रथितविक्रमा जयाभिलाषिणो विद्वद्वराः सङ्गताः। तत्र का गणना मेदपाटैककोणनिवासिनो ज्ञानलवदुर्विदग्धस्य पण्डितवराकस्य मादृशस्य। तथापि संस्कृतसमुन्नति-पथपरिष्कारपरायणानां मेदपाटवसुन्धरारत्नस्व-रूपाणां श्रीलक्ष्मीलालजोशीमहाभागानामादेशमनु-रुध्य समुपस्थितः सेवायां स्वधार्ष्ट्यं प्रकटयितुम्।

नूनमेषा सहित्यपरिषद्; ततः साहित्यविषय-मवलम्ब्यैव यत्किञ्चिद्वक्तव्यमर्हति। तत्साहित्य-जीवातुभूतं रसं ध्वनिं चावलम्ब्य किञ्चिद्वक्तुमभि-लषामि।

लोके प्रतिदिनं वयं लौकिकान् हर्षशोकादि-जनकान् व्यवहारान् पश्यामः। तेषां व्यवहाराणां संस्कारा मानवस्य मानसपटलेऽङ्किता भवन्ति। जन्मान्तरीयसंस्कारैः सङ्गतास्ते संस्कारा विभावा-दिभिरानुकूल्यमुपलभ्य उद्बुद्धाः सन्तः आनन्द-कारणतां यान्ति। अलौकिकविभावनादिक्रिया-, प्रसूतास्तेऽप्यलौकिकाः कथ्यन्ते। अलौकिकक्रिया-वत्त्वादेव च ते सुखात्मका भवन्ति, न तु दुःखात्मकाः एतादृशी साहित्यसरणिः। यथोक्तं भट्टनायकेन—भरताचार्यस्य रससूत्रस्य व्याख्यानावसरे—'निबिड़-निज-मोह-सङ्कटता-निवारणकारिणानुभवस्मृत्यादि विलक्षणेन विभावादिसाधारणीकरणात्मना भाव-कत्वव्यापारेण विभावानुभावव्यभिचारिभावाः सामान्यतां यान्ति। अनन्तरं भोजकत्वव्यापारेण सामाजिकः स्थायिभावरूपं रसमनुभवति। "अनु-भवस्मृत्यादिविलक्षणेन सत्त्वोद्रेकप्रकाशानन्दमयः निजसंविद्विश्रान्तिलक्षणेन परब्रह्मास्वादविधेन भोगेन भुज्यते।" इति।

तत्र विचारणीयं यत् संस्कारा मानसपटले अङ्किता भवन्ति। चैतन्यं तान् प्रकाशयति। अतएव साक्षिभास्यत्वं तेषाम्। साक्षी च चैतन्यं भवति। यथा गृहाभ्यन्तरस्थितान् पदार्थान् दीपः प्रकाशयति, न तु तेषु वैकृत्यं जनयति, तथैव चैतन्यमपि स्वस्व-रूपस्थितानेव संस्कारान् प्रकाशयति, न तु तत्र कञ्चिद्विकारं जनयति। कथं पुनर्दुःखजनका अपि शोकसंस्कारा. सुखमेवोत्पादयन्तीति, साधारणी-करणव्यापारोऽत्र प्रयुज्यते, तेन भावादिभ्यो विशे-

षत्वं ममत्वादिकं विनिर्गच्छति, सामान्यत्वं च समायातीत्यत्र प्रष्टव्यं भवति, यत् साधारणीकरणं समेषामेव विभावानुभावव्यभिचारिभावस्थायिभावानां भवति, उत केषाञ्चन भावानाम्। विभावानुभावव्यभिचारिभावानां साधारणीकरणं तु अस्मादृशानामपि सम्मतम्; किन्तु स्थायिभावस्य साधारणीकरणं न मानससरणिमधिरोहति। यतः साधारणीकरणेन तस्य स्थायिभावस्य भावसामान्यत्वे एकस्य रसस्यानुभवकाले रसान्तरानुभवस्थितिः सम्पद्येत, स्थायित्वं तस्य नश्येत्। यदि च स्थायिनः साधारणीकरणं नोपपद्यते, तर्हि तु दुःखानुभवस्थितिरपि स्वतः सिद्धा भवति; संस्काराणां स्वस्वरूपे स्थितत्वात्।

एतदेव मनसि निधाय भगवता भरताचार्येण स्पष्टमुद्घोषितं नाट्यशास्त्रे प्रथमाध्यायस्योनविंशोत्तरशततमायां कारिकायाम्—

**"योऽयं स्वभावो लोकस्य सुखदुःखसमन्वितः।**
**सोऽङ्गाद्यभिनयोपेतो नाट्यमेतद्भविष्यति॥"**

तथैव षष्ठाध्यायस्य द्वादशतमायां कारिकायाम्—

**"नृपतीनां यच्चरितं रसभावचेष्टितं बहुधा।**
**सुखदुःखोत्पत्तिकृतं भवति हि तन्नाटकं नाम॥"**

भरताचार्यमतमनुसरता श्रीमताभिनवगुप्तपादेनाभिनवभारत्यामुक्तम्—'योऽयमिति प्रत्यक्षकल्पानुव्यवसायविषयो लोकप्रसिद्धसत्यसत्यादिविलक्षणत्वात् यच्छब्दवाच्यो लोकस्य सर्वस्य साधारणतया स्वत्वेन भाव्यमानश्चर्व्यमाणोऽर्थो नाट्यम्। स च सुखदुःखरूपेण विचित्रेण समनुगतो न तु तदेवात्मा। तथा हि—रतिहासोत्साहविस्मयानां सुखस्वभावत्वम्। तत्र तु चिरकालव्यापिसुखानुसन्धिरूपत्वेन विषयोन्मुखप्राणवत्तया तद्विषयाशंसा बाहुल्येनापायभीरुत्वाद् दुःखानुवेधो रतेः। हासस्य सानुसन्धानस्य विद्युत्सदृशस्तात्कालिकोऽल्पदुःखानुवेधः सुखानुगतः। उत्साहस्य तात्कालिकदुःखायासनिमज्जनरूपानुसन्धिना भाविबहुजनोपकारिचिरतरकालभाविसमाचिकीर्षात्मना सुखरूपता। विस्मयस्य निरनुसन्धानतडित्तुल्यरूपता।

क्रोध-भय-शोक-जुगुप्सानान्तु दुःखस्वरूपता। तत्र चिरकालदुःखानुसन्धिप्राणो विषयगतात्यन्तिकनाशभावना तदाकाङ्क्षाप्राणतया सुखदुःखानुवेधवान् क्रोधः। निरनुसन्धि तात्कालिकदुःखप्राणतया तदपगमाकाङ्क्षोत्प्रेक्षितसुखानुसम्भिन्नं भयम्। द्वैकालिकस्त्वभीष्टविषयनाशजः प्राक्तनसुखस्मरणानुविद्धः सर्वथैव दुःखरूपः शोकः। उत्पद्यमानदुःखानुसन्धानजीविताविषयात् पलायनपरायणरूपा निषिध्यमानशङ्कितसुखानुविद्धा जुगुप्सा। समस्तपूर्वदुःखसञ्चयस्मरणप्राणितः सम्भावितदुपरमबहुल-सुखमयो निर्वेदः।' इति।

इत्थं शृङ्गारहास्याद्भुतवीराश्चत्वारो रसाः सुखप्रधाना दुःखानुविद्धाः, तथा रौद्र-भयानक-बीभत्सास्त्रयो दुःखप्रधानाः सुखानुविद्धाः। करुणः सर्वथा दुःखात्मकः शान्तश्च नितान्तं सुखात्मकः सिध्यति। उत्तरवर्तिभिराचार्यैरपि तद्दूरीकृतं प्रतीयते, यदुक्तमभिनवगुप्तपादेन। न्यूनाधिकरूपेण

समेषां रसानां सुखात्मकत्वे संगुष्टास्ते । केवलं करुणस्य सर्वथा दुःखात्मकत्वं न सहन्ते, तेषु दशरूपकस्य टीकाकारो धनिकः सर्वप्रथमः । वदति च सः— 'ननु च युक्तं शृङ्गार-वीर-हास्यादिषु प्रमोदात्मकेषु वाक्यार्थसम्भेदादानन्दोद्भव इति । करुणादौ तु दुःखात्मकत्वे कथमिवासौ प्रादुष्यात् । तथाहि— तत्र करुणात्मककाव्यश्रवणाद् दुःखाविर्भावोऽश्रुपातादयश्च रसिकानामपि प्रादुर्भवन्ति । न चैतदानन्दात्मकत्वे सति युज्यते ।' इति ।

इत्थं स्वयमेव पूर्वपक्षमुद्भाव्य स्वयमेवोत्तरयति । 'सत्यमेतत्, किन्तु तादृश एवासावानन्दः सुखदुःखात्मको यथा प्रहरणादिषु सम्भोगावस्थायां कुट्टिमे स्त्रीणाम् । अन्यच्च लौकिकात्करुणात् काव्यकरुणः, तथा ह्यत्रोत्तरा रसिकानां प्रवृत्तयः । यदि च लौकिककरुणवद् दुःखात्मकत्वमेवेह स्यात्तदा न कश्चित्तत्र प्रवर्तेत । तथा करुणैकरसानां रामायणादीनां महाप्रबन्धानामुच्छेद एव भवेत् । अश्रुपातादयश्च इतिवृत्तवर्णनाकर्णनेन विनिपातेषु लौकिकवैक्लव्य-दर्शनादिवत् प्रेक्षकाणां प्रादुर्भवन्तो न विरुध्यन्ते । तस्माद्रसान्तरवत् करुणस्याप्यानन्दात्मकत्वमेव ।' इति ।

परं न सोऽत्र विषये सफलीबभूव । यतो यानि सूक्ष्मकारणानि प्रकटीकृत्याभिनवेन करुणस्यात्यन्तयो दुःखमयत्वं साधितं, तेषां खण्डनस्य तु दूरे कथा, नामोल्लेखनमपि न कृतम् । स्वमनोऽनुकूलं च तर्कमुत्थाप्य तस्यैव खण्डनं कृतम् । तत्तर्केऽपि च नाधिकं बलं किञ्चित् । किं च 'तादृश एवासावानन्दः सुखदुःखात्मक इमि वदता प्रकारान्तरेण करुणस्य दुःखात्मकत्वं स्वीकृतम् । तस्यैव च परिपोषमुपपादयता सम्भोगावस्थायाः प्रहरणादीनामुदाहरणमुपस्थापितम् । एतस्य समुचितमुत्तरं जैनाचार्यहेमचन्द्रशिष्याभ्यां रामचन्द्रगुणचन्द्राभ्यां प्रदत्तं लोचनपथमवतरिष्यत्यनुपदमेव ।

धनिकाधारेण कविराज-विश्वनाथेनापि साहित्यदर्पणे सुखात्मकत्वमेव प्रतिपादितं रसानाम् । उक्तं हि तत्र तेन—

**"करुणादावपि रसे जायते यत्परं सुखम् ।**
**सचेतसामनुभवः प्रमाणं तत्र केवलम् ॥**
**किं च तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः ।**
**तथा रामायणादीनां भविता दुःखहेतुता ॥**
**हेतुत्वं हर्षशोकादेर्गतेभ्यो लोकसंश्रयात् ।**
**हर्षशोकादयो लोके जायन्तां नाम लौकिकाः ।**
**अलौकिकविभावत्वं गतेभ्यः काव्यसंश्रयात् ॥**
**सुखं सञ्जायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः ।**
**अश्रुपातादयस्तद्वद् द्रुतत्वाच्चेतसो मताः ॥**

अत्रोच्यते-मानवसृष्टौ मानवः सुखदुःखादिभावनया प्रेरित एव व्यवहरति । तानेव व्यवहारानवलोक्य कविहृदये संस्काराः प्रभवन्ति । आनुकूल्यमुपलभ्य त एव संस्काराः प्रबलतां यान्ति मूर्तरूपेण च काव्यात्मना प्रादुर्भवन्ति । अर्थात् कविरन्तर्लीनभावना एव निजप्रतिभया चमत्कारपूर्णभाषाद्वारा प्रकटयति । तथाचोक्तं ध्वनिकृता—

**शृङ्गारी चेत्कविः काव्ये सर्वं रसमयं जगत् ।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ।।"**
इति ।

यदि कविः दुःखानुभूत्यवसरे शृङ्गारस्य, सुखानुभूत्यवसरे च करुणस्य रसस्य वर्णनं प्रस्तौति, तदा स कथमपि साफल्यं न लभते । एतद्रहस्यं च कविहृदय एव जानाति नापरम् । अनेन काव्ये कवेरात्मा ओतप्रोत इति सिद्ध्यति । काव्यरसिकः पाठकस्तादृशं काव्यं पठति, तदा तन्मनस्यपि तादृशीनां भावनानामेवोदयः सम्भाव्यते । अतएव वीरः शृङ्गारमयकाव्यपाठेन रसिकश्च वीररसप्रधानकाव्यपाठेनानन्दमनुभवति । यया भावनया प्रेरितः कविः काव्यं करोति, पाठकहृदयेऽपि सैव भावनोदयं याति । ततश्च शोकावेगे लिखितरामायणादिपाठे यदि दुःखमनुभूयते पाठकेन, तदा का वार्ता दुःखस्य । तदतिरिक्तं चाश्रुपातादि कारणं वैक्लव्यमङ्गीक्रियते चेत् तस्यैव नामान्तरं मूलभूतं दुःखं कथं न स्वीक्रियते । कामं वैक्लव्यं लौकिकमलौकिकं वा भवेत् अन्तस्तलस्थितस्य दुःखस्यैव कारणं भवति । दुःखप्रदरामायणादीनां पाठे पुनः पुनः प्रवृत्तिस्तु धर्मभावनया भवति, न तु रसिकभावनया । धार्मिको मानवः मृत्युमुखमालेलिहानोऽपि महता कष्टेन बद्रीनाथस्य दर्शनाय यतते । किंच "प्रवृत्तिरेषा भूतानाम् । बलादाकृष्य मोहाय महामाया प्रयच्छति । प्रकृतिस्त्वां नियोक्ष्यति ।" इत्यादि । अतएव सद्योजातस्य शिशोः स्तन्यपानप्रवृत्तिः प्रकृतिजन्या, न तु सुखदुःखादि कारणप्रभवा । पुत्रशोकातुरस्य पितुः पुनः सन्तानोत्पादनप्रवृत्तिर्नसुखादिहेतुका । दण्डदुःखानुभूतस्यापि चौरस्य चौर्यकरणप्रवृत्तिः प्रकृतिपारवश्येन ।

"व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः" इति वदता मम्मटाचार्येण रसानां सुखदुःखात्मकत्वे न किमपि स्वमतं प्रकटीकृतम् । प्रतीयते तेनापि अभिनवगुप्तपादसरणिरेवानुसृता । पण्डितराजेन जगन्नाथेन—'चिद्विशिष्टा रतिः, रतिविशिष्टा चिद्वा रसः' इति प्रतिपादितम् । तत्र वक्तव्यम्—निर्विकारे चैतन्ये रतेर्विशिष्टता कथं सम्भवेत्, कथं वा रत्यां चैतन्यस्य विशिष्टता ? रत्यादिसंस्कारा मनसि तिष्ठन्ति । चैतन्यं च ततः पृथग्भूत भवति । मनःस्थितान् संस्कारान् चैतन्यं प्रकाशयति केवलम् । अतएव साक्षिभास्यत्वं सङ्गच्छते । न तान् परिवर्तयति । यथान्धकारस्थितान् पदार्थान् दीपः प्रकाशयति, न तान् परिवर्तयति । अलौकिकक्रिययैतत्सम्भवति चेत्, साप्यलौकिकक्रिया साधारणीकरणव्यापार एव । साधारणीकरणे चाहन्त्वं ममत्वमेव परिसर्पति । पदार्थास्तु तद्रूपा एव तिष्ठन्ति । यद्यात्मचैतन्यस्यानन्दमयत्वात्संस्कारा अपि तद्रूपतां प्रतिपद्यन्ते । इत्यपि न सन्तोषकरम् । येषां संस्काराणां साक्षिभास्यत्वमुक्तं त एव कथं मिश्रिता भवन्तीत्युच्यते । किं च मिश्रणे निर्विकारत्वं चैतन्यस्य नश्येत् ।

स्वमतपुष्टौ पण्डितराजेन तैत्तिरीयोपनिषदः खण्डवाक्यमुपन्यस्तम् । किन्तु तदुपन्यासो न समीचीनः प्रतिभाति । तत्र शाङ्करभाष्यमेव प्रमाणम् । तद्यथा—"यद्वै सुकृतं रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति । के ह्येवान्यात्कः प्राण्याद्, यदेष आकाश आनन्दो न स्यात् । एष

ह्येवानन्दयति । (तै०उ० २।७।१) तत्र शाङ्करभाष्यम्-'यद्वै तत्सुकृतम्। रसो नाम तृप्तिहेतुरानन्दकरो मधुराम्लादि प्रसिद्धो लोके। रसमेवायं लब्ध्वा प्राप्यानन्दी सुखी भवति। नासत आनन्दहेतुत्वं दृष्टं लोके । बाह्यानन्दसाधनरहिता अप्यनीहा निरेषणा ब्राह्मणा बाह्यरसलाभादिव दृश्यन्ते विद्वांसः । नूनं ब्रह्मैव रसस्तेषाम् । तस्मादस्ति तत्तेषामानन्दकारणं रसवद् ब्रह्म ।" इति । अत्र रसस्वरूपं ब्रह्मेति प्रतिपादितं न तु ब्रह्मस्वरूपो रस इति। यथा ब्रह्मणो नामनि पृष्टे उच्यते 'तस्य वाचकः प्रणवः" तथैव ब्रह्मणः स्वरूपे पृष्टे रसरूपं ब्रह्मेति । विदुषां तु मतमेतावद्यत्—वेदे वेदसम्बन्धि-साहित्ये वा काव्यरसवाचको रसशब्दो नोपलभ्यते । यत्र च रसशब्दप्रयोगो दृश्यते, तत्र भिन्नार्थे । यथा–"जम्भेरसस्य वावृधे (ऋ० १।३७।५ स्वादूरसो मधुपेयो वराय (ऋ० ६।४४।२१) यो वः शिवतमो रसस्तस्य भाजयते हनः (ऋ० १०।९।२) रसः गोषु प्रविष्टो यः (अथर्व. १४।२।५८) रसो वै मधु (श० ब्रा० ६।४।३-२-७) प्राणो वा अङ्गानां रसः (बृ० उ० १।३।१९) वेदा हि रसाः (छां० उ० ३।५।४)" इत्यादि ।

अन्ते च सिद्धान्तरूपेण रामचन्द्रगुणचन्द्रयोर्विचारान् नाट्यदर्पणतः समुद्धृत्य विरंस्यामः । यद्यथा—

**"स्थायीभावः श्रितोत्कर्षो विभावव्यभिचारिभिः।**
**स्पष्टानुभावनिश्चेयः सुखदुःखात्मको रसः ।।**

(३।१०९)

तत्रेष्टविभावादिग्रथितस्वरूपसम्पत्तयः शृङ्गार-हास्य-वीराद्भुतशान्ताः सुखात्मानः । अपरे पुनरनिष्टविभावाद्युपनीतात्मानः करुण-रौद्र-बीभत्स-भयानकाश्चत्वारो दुःखात्मानः ।

यत्पुनः सर्वरसानां सुखात्मकत्वमुच्यते तत्प्रतीतिबाधितम् । आस्तां नाम मुख्यविभावोचितः काव्याभिमततयोपनीतविभावोपचितोऽपि भयानको बीभत्सः करुणो रौद्रो वा रसास्वादवतामनाख्येयां कामपि क्लेशदशामुपनयति । अतएव भयानकादिभिरुद्विजते समाजः। न नाम सुखास्वादादुद्वेगो घटते ।

यत्पुनरेभिरपि चमत्कारो दृश्यते, स रसास्वाद-विरामे सति यथावस्थित-वस्तु-प्रदर्शकेन कवि-नट-शक्तिकौशलेन । विस्मयन्ते हि शिरच्छेदकारिणामपि प्रहारकुशलेन वैरिणा शौण्डीरमानिनः । अनेनैव च सर्वाङ्गाह्लादकेन कवि-नट-शक्ति-जन्मना चमत्कारेण विप्रलब्धाः परमानन्दरूपतां दुःखात्मकेष्वपि करुणादिषु सुमेधसः प्रतिजानते । एतदास्वादलौल्येन प्रेक्षका अप्येतेषु प्रवर्तन्ते । कवयस्तु सुख-दुःखात्मक-संसारानुरूप्येण रामादिचरितं निबध्नन्तः सुखदुःखात्मकरसानुविद्धमेव ग्रथ्नन्ति, पानकमाधुर्यमिव च तीक्ष्णास्वादेन सुतरां सुखानि स्वदन्ते ।

अपि च सीताया हरणं, द्रौपद्याः कचाम्बराकर्षणं, हरिश्चन्द्रस्य चाण्डालदास्यं, रोहिताश्वस्य मरणं, लक्ष्मणस्य शक्तिभेदनं, मालत्या व्यापादनारम्भणमित्याद्यभिनीयमानं पश्यतां सहृदयानां को नाम सुखास्वादः ? तथानुकार्यगताश्च करुणादयः परिदेवितानुकारित्वात् तावत् दुःखात्मका एव ।

यदि चानुकरणे सुखात्मानः स्युर्न सम्यगनुकरणं स्याद् विपरीतत्वेन भासनाद् । ये ऽभीष्टविनाशदुःखवतां करुणे वर्ण्यमानेऽभिनीयमाने वा सुखास्वादः, सोऽपि परमार्थतो दुःखास्वाद एव । दुःखी हि दुःखितसुखमभिमन्यते । प्रमोदवार्तया तु ताम्यतीति वातया करुणादयो दुःखात्मान एवेति । तदेवं रसानां स्वरूपत्रयमापतति—

(१) सर्वे रसाः सुखत्मानाः ।

(२) सर्वे रसाः सुखदुःखोभयात्मकाः ।

(३) केचन रसाः सुखमयाः केचन च दुःखमया इति ।

तत्र तेषां सामञ्जस्यरक्षायै प्रयत्येत चेद्वक्तुं शक्यते यत् अभिनवगुप्तेन प्रतिपादिताः ये सुखात्मकाः दुःखादुविद्धा, ये च दुःखात्मकाः सुखानुविद्धाः, तेषामनुवेधः परित्यज्येत, कैवल्य चावशिष्येत् चेत् शृङ्गार-हास्य-वीराद्भुतशान्ताः पंच रसाः सुखात्मानः, रौद्र-भयानक- करुण-बीभत्साश्च चत्वारो रसाः दुःखात्मकाः सिध्यन्ति ।

विशेषतोऽस्माममभिनवकाव्यप्रकाशोऽत्रलोकनीयम् ।



## राजस्थान-संस्कृत-साहित्य-सम्मेलने

# शिक्षा-परिषदः सभापतीनां

### डॉ. मथुरालालशर्मणामभिभाषणम्

संस्कृतं प्राचीनतमा भाषा वर्तते । संसारस्य जीवितभाषासु नास्यास्तुलनां बिभर्ति काचिदन्या भाषा । वेदा अपौरुषेया इति वयं स्वीकुर्महे, अतः संस्कृते स्वत एवापौरुषेयत्वं समायाति ; परन्तु विकासवादिनः सिद्धान्तमिमं नोररीकुर्वन्ति । तथापि ऋग्वेदः खिस्ताब्दात्पञ्चाशत्सहस्रवर्षप्राचीनोऽङ्गीक्रियते* । अतः संस्कृतभाषापि पञ्चाशतत्सहस्रवर्षप्राचीना भाषा स्वीकरणीया भवति । इतिहासदृष्ट्या—इदं खलु विस्मयावहम्, यदियती प्राचीनतमापीयं भाषाधुना सम्यग् जीवति ।

संस्कृतभाषायां जीवस्य ब्रह्मणश्च यथा विवेचनमुपलभ्यते न तथान्यासु भाषासु । प्राचीनऋषयो मुनयश्च ध्यानावस्थिता भूत्वा शाश्वतसत्यान् सिद्धान्तांश्चानुसमधिषत । अतएव वेदेषु 'ऋषिदर्शनात्' 'ऋषयो मन्त्रद्रष्टारः" इति सुप्रसिद्धोक्तिरवलोक्यते । वैदिकवाङ्मयं प्रचुरं सुविशालं च वर्तते । अस्मिन् संहिताचतुष्टयं, ब्राह्मणानि, आरण्यकाः, उपनिषदश्चान्तर्भवन्ति । अष्टादशकोनविंश-

*एतत्तु न सर्वसम्मतम् (ह. त्रि.) ।

तिशताब्द्यां यूरोपीया विद्वांसो वाङ्मयमिदं सूक्ष्मतयाध्यगीषत। ते स्वपृथक्पृथक्दृष्टिमनुरुध्य विभिन्ननिष्कर्षान् लब्धवन्तोऽपि श्रुतिवाङ्मयस्य कोणं कोणमपि मृगितवन्तः।

महाभारतं, रामायणं, पुराणवाङ्मयमपि महत्त्वाधायकं वरीवर्ति। इदमखिलं भारतीयसंस्कृतेर्विश्वकोष इत्युच्यते। आस्माकीनं दार्शनिकं साहित्यं यूनानीयदर्शनादपि प्राचीनतरम्, आयुर्वेदसाहित्यस्य प्रारम्भस्तु-अथर्ववेदकालादेव भवति। गणितस्य ज्यौतिषस्य च संस्कृतभाषायां नैके ग्रन्थाः सन्ति, अधुनापि येषां प्रतिकृतिर्नोपलभ्यते। राजनीतौ महाभारतस्य शान्तिपर्व, कौटिल्यस्यार्थशास्त्रम्, कामन्दकीय-नीतिसारः, शुक्र-नीति वाक्यामृतम्, इत्यादयो महार्घा ग्रन्था विद्यन्ते, एतेषु प्रतिपादिताश्च राजनीतिसिद्धान्ता अद्यत्वेऽपि व्यवहार्या भवन्ति। स्थापत्य-कलाम्, दुर्गनिर्माणम्, भवननिर्माणमुद्दिश्यापि संस्कृतभाषायां बहवो ग्रन्थाः सन्ति। प्रतिमा-शास्त्रं चतुर्थशताब्दोत एकादशशताब्दीपर्यन्तं मान्यो ग्रन्थ आसीत्। एनमनुसृत्योत्कीर्णा मूर्तयः कलाया उत्कृष्टतां व्यञ्जयन्ति।

मौर्यसाम्राज्यात्पूर्वं पश्चाच्च संस्कृतं राजभाषाऽऽसीत्। गुप्तसाम्राज्ये राजपुत्राणां पूर्वकालेऽपि शासने व्यवहारे राजकार्येषु च संस्कृतं प्रयुज्यते स्म। द्वादशशताब्दीं यावल्लिखितग्रन्थाः प्रायशः संस्कृतमाध्यमेनैव व्यलेखिषत। परस्परं पत्रव्यवहारः, शिलालेखाः, ताम्रपत्राणि च संस्कृतभाषायामेवालिख्यन्त।

यदा भारतीया ब्रह्मदेश-यवद्वीप-सुमित्रा-बोर्नियाप्रभृतिद्वीपान्यगच्छन्, तत्र स्वीयं राज्यं च समस्थापयन्, तदा संस्कृतभाषापि प्रचुरं प्रचारं प्रापत्। रामायणं महाभारतं च जना अपाठिषुः। ग्रन्थद्वयस्यापि प्रती ह्यत्रालभ्येताम्। तत्रापि शिलालेखानां भाषा संस्कृतमेवास्ति। प्रदर्शितदिशैव पश्चिमी-एशियायामपि संस्कृतस्य प्रचारोऽभवत्। ताशकंदे-खोताने च संस्कृत-विद्यालया आसन्, यत्र चीन-जापान-यूनानप्रभृतिदेशानां शिक्षार्थिनः शिक्षामग्रहीषत। एतेषां नगराणां भूमिगतखण्डगृहेषु तादृशो विद्यालया अधिगताः येष्वेतेषामेव देशानां विद्यार्थिनां चित्राणि सन्ति। एतेष्वेव खण्डगृहेषु संस्कृतग्रन्था अप्युपलभ्यन्त। शिक्षा-विधेर्दृष्ट्येयमानन्दवार्ता, यदमीषां ग्रन्थानां प्रतिपृष्ठं भाषाद्वयं विद्यते। दक्षिणतः संस्कृतभाषा वामतश्च तुर्कीभाषा। अनया रीत्या पङ्क्तिमात्रस्यानुवादस्तुर्कीभाषायां प्रदत्तो वर्तते, येन पाठकेभ्यः संस्कृतं सुबोधं सुगमञ्चाभूत्। अमीष्वेव विद्यालयेषु वैदेशिकानां कृते संस्कृतशिक्षणविधिर्व्यकसत्। अस्माकं ह्रस्वदीर्घस्वरान् वैदेशिका वैलक्षण्येन जगृहुः, काश्मीरादुत्तरे भागे तुर्कस्ताने च द्वादशाक्षरी आविष्कृता या कालान्तरे 'बाराखड़ी' इति व्यपदेशभागिन्यभवत् यस्याश्च प्रचार आकाश्मीरात्कुमारीं यावत् १८२५ खिस्ताब्दपर्यन्तं प्रचलन्नासीत्। तत्कालिकां शिक्षा-स्थितिं परीक्षितुं सर्वकारनियुक्त आयोगः स्वप्रतिवेदनेऽसूचयत्, यत् प्राथमिकशिक्षायाः प्रारम्भो भारते सर्वत्र द्वादशाक्षरीतः, शतं यावद्गणनया च भवति। द्वादशाक्षरी-विधिस्तुर्कस्तानस्थलाकेभ्यः संस्कृतपाठनाय विकसितः प्रचलितश्चाभवत्, किन्तु सुगमतया सारल्येन चायं निखिलेऽपि

भारतेऽगृह्णयत । स्वर्गताय डॉ० रघुवीरमहोदयाय शारदालिप्यां लिखितैका द्वादशाक्षर्या हस्तलिखित-पुस्तिकाऽमिलत्, यस्याः प्रणयनं नवमशताब्द्या-मभवत् । विधिरयं नैकशताब्दीतो लोकप्रियोऽभूत्, किन्तु ग्रन्थस्यास्य निर्माणं नवमशताब्द्यामेव सञ्जातम् । अस्य पुस्तकस्याभिधानं 'अलकालि-बीजाहरणम्' वर्तते' अर्थात् स्वराणां व्यञ्जनाना-ञ्चोच्चारणविधिर्ह्रस्वदीर्घविधिश्चास्मिन्निर्दिष्टः । विधिरयमुर्दू भाषायाः पाठन उपयुज्यते स्म ।

अष्टमशताब्द्याः प्रारम्भादेव सिन्धप्रान्ते अर्व-देशीयमुहम्मदीयैः स्वीयं राज्यं समस्थाप्यत । कतिचिद्वर्षाण्यनन्तरमर्वदेशीयैः पश्चिमीतुर्कस्तान-माक्रम्य तत्रत्यमेकं बौद्धविहारमलुण्ठ्यत । अस्या-धिपतिरेको महाविद्वान् ब्राह्मण आसीत्, तस्याभि-धानं 'वरमक' इति । एनं गृहीत्वा यवनतां च प्राप-यित्वा स्वदेशमनयन् । अयं महाविद्वान् बुद्धिमां-श्चासीत् ।

अतोऽयं बगदादस्य धर्मगुरोः प्रधानमंत्रिस्थाने न्ययुज्यत । अयं स्वशासननैपुण्यं सम्यगख्यापयत्, फलतः प्रधानमंत्रिणः पदमनेकपुरुषपर्यन्तमस्यैव कुलेऽतिष्ठत् । अस्य कुलस्य समस्तमंत्रिणो वरमक-पदवीभाजोऽभवन्, अर्वदेशेष्वमीषां विशिष्य प्रसिद्धिरासीत् । यवनत्वे स्वीकृतभाषां भारतीयविद्यां च प्रत्यनुरागः समवर्धत । एभिरर्वविदुषां नैकानि शिष्टमंडलानि भारतवर्षं प्रेषितानि, यानि गुजरातस्य चालुक्यानां दक्षिणस्य राष्ट्रकूटवंशीयानां राज्ञां सभासु समुपस्थाय, भारतीयविद्वद्भिश्च सह सम्पर्कं संस्थाप्य भारतीयविद्यानां विविधसंस्कृतग्रन्थान् स्वदेशमनैषुः । अमीषां संस्कृतग्रन्थानामरबीभाषा-यामनुवादो वरमकप्रधानमंत्रिणां निर्देशेनाभवत्, एवं च भारतीयविद्यानां प्रचारोऽर्वदेशे समजायत ।

वरमकाधर्मगुरुणां राज्ये यत्र-तत्र पुस्तकालयान् समस्थापयन्, येषु संस्कृतस्य मूलग्रन्थास्तेषामरबी-भाषानुवादाश्च समगृह्यन्त । एषु साहित्यम्, वार्ता, गणितम्, ज्यौतिषम्, दर्शनम्, शालिहोत्रम्, शकुन-विचार इत्यादि विषयाणां ग्रन्थाः सन्ति । आयुर्वेदस्य, गणितस्य, ज्यौतिषस्य च न केवलमर्व-देशेषु तत एव यूरोपीयदेशेष्वपि प्रचारोऽभूत् ।

१ तः ९ पर्यन्तमङ्कानां शून्यस्य च ज्ञानमर्व-देशीयजना भारतवर्षादेव प्राप्नुवन् अत एषामरबी-'हिन्दसे' इत्यभिधानमस्ति, अर्वदेशादेषामङ्कानां प्रचारो यूरोपदेशेऽभवत् ।

आयुर्वेदस्य प्रचारः समस्तेऽर्वदेशे समजायत, स्थाने स्थाने च औषधालयाः समुद्घाटिताः, येषा-मध्यक्षाः क्वचिदायुर्वेदविद्वांसः क्वचिच्च हिन्दूवैद्या एव सन् ।

इदमुल्लेखनीयमस्ति यद् बगदादस्य प्रसिद्ध-धर्मगुरोः हारुनुलरशीदस्य लघीयान् भ्राता यदा-ऽपस्माररोगेण रुग्णः सञ्जातस्तदा भारतीयवैद्यस्तं चिकित्सितवान् । इदमप्यैतिहासिकं तथ्यं यन्मोह-म्मदस्य पत्न्याश्चिकित्सामपि भारतीयवैद्य एवा-करोत् । घटनाद्वयमपि पुष्णाति यदवसंसारे आयु-र्वेदस्य कियान् प्रचार आसीत् । प्रचारश्चायमायु-र्वेदग्रन्थानामरबी-भाषानुवादादभवत् । वरमकावंश एवास्य श्रेयोभाक् ।

त्रयोदशशताब्द्याः प्रारम्भ उत्तरभारते मुह-

म्मदीया राज्यं समस्थापयन्, शनैश्च तस्य विस्तारोऽप्यभूत्। एकस्यामेव शताब्द्यां समस्तेऽपि भारते मुहम्मदीयैरेकच्छत्रं राज्यं संस्थापितम्। अनेन राजनैतिकविपर्यासेन धर्मः, समाजः, संस्कृतिः, साहित्यं च विदलिता बभूवुः। संस्कृतग्रन्थानां पठन-पाठनं संकुचितमभवत्। फिरोजशाह तुगलकस्य समये केषाञ्चित् संस्कृतग्रन्थानामनुवादोऽकारिषत, परन्त्वस्योद्देश्यं नासीत् संस्कृत-प्रचारः। 'तारीख-ए-फिरोज़शाही'पुस्तकस्य लेखकोऽलिखत् यत् संस्कृतग्रन्थेषु बहवोऽंशा उपयोगिन आसन्, विशेषतश्चिकित्सातर्कसम्बन्धिनः। अतो मुहम्मदीयैरपि काफिरशब्दवाच्यानां हिन्दूनां भाषा पठनीयत्वेन स्वीकृताऽऽसीत्, अधुनामीषां ग्रन्थानां फारसी-भाषानुवादाद् हीनभाषेयं न पठनीया भविष्यति। अकबरस्य शासनकाले औदार्यात्संस्कृतं किञ्चित् प्रोत्साहनमलभत। तस्मिन्नेव समये भट्टोजीदीक्षितः सिद्धान्तकौमुदीं व्यरचयत्। तदारभ्य व्याकरणं साहित्यापेक्षया महत्त्वमभजत। अवरङ्गजीवः संस्कृतस्य पठन-पाठनमरुणत्सीत्। अतो द्वाराणि पिधाय जनाः संस्कृतं पाठयामासुः। तादृशे समये संस्कृतस्य जीवनाय व्याकरणं साधनमभूत्। अस्मिन्नेव समये मुग्धबोधः, सारस्वत-चन्द्रिका लघुकौमुदी, मध्यकौमुदी, इत्यादिव्याकरणग्रन्था व्यरच्यन्त। सर्वेषामुद्देश्यं व्याकरणद्वारा संस्कृत-शब्दानां व्युत्पत्तिः, शब्दानां धातूनां च रूपाणि वाक्य-रचना च यथापूर्वं तिष्ठेत्। अनेन शिक्षा-विधिना संस्कृतं जीवितमतिष्ठत्, परन्तु तस्य प्रचारः सीमितः सञ्जातः। आलापे पत्रव्यवहारे च संस्कृतेन व्यवहरन्तो जना व्याकरणाशुद्धिभयात्संकुचिता एवातिष्ठन्। तथापि मुहम्मदीयानां काले नैके संस्कृतग्रन्था विरचिताः, अनेकानि च नगराणि संस्कृत-विद्यायाः केन्द्रस्थानान्यमन्यन्त। अस्माकं राजस्थाने जयपुरम्, बूँदी, नाथद्वारा तेषु परिगणितुं शक्यन्ते।

आङ्ग्लानां समागमनानन्तरं संस्कृतभाषाया अध्ययनं नवीनप्रणाल्याभवत्। आङ्ग्ला अन्ये च यूरोपीयाः भारतीयसस्कृतेरध्येषिषव आसन्। संस्कृतज्ञानमृते तत्कथं भवेदतस्ते स्वप्रणाल्यैवाधिजगिरे। आंग्लविद्वद्भिर्वैदिकव्याकरणानि संस्कृत-व्याकरणानि च निरमीयन्त। पञ्चमषष्ठशताब्द्या यथा पश्चिमीतुर्कस्ताने संस्कृताध्ययनस्य नवीना पद्धतिरचलत्, तथैव यूरोपस्य भारतस्य च सांस्कृतिकाध्ययनस्य नूतनसरणिः प्राचलत्। आङ्ग्लानां सम्पर्कात् पाश्चात्यरीत्या प्राप्तशिक्षा भारतीयनव-तरुणा अपि तयैव सरण्या संस्कृतमध्यैषत। अस्माकं मध्यकालिकः पाठ्यक्रमो लघुकौमुदीत, रघुवंश-स्याद्यसर्गद्वयाच्च प्रारभ्यत, किन्त्वेकोनविंशति-शताब्द्यां पाठ्यक्रमः पंचतंत्रकथाभ्य आङ्ग्लशैली-पुष्टव्याकरणेभ्यश्च प्रारब्धोऽभूत्। प्रणालीयं समीचीनापि आङ्ग्लभाषामाध्यमत्वाद्दूषितैवासीत्। अतो विशिष्य संस्कृतभाषाध्ययनं परिहाय विद्यार्थिन आङ्ग्लभाषायामनूदितमेव विषयं कण्ठस्थीकृत्य परीक्षामुदतीतरन्। अनेन विधिना संस्कृतं स्वीकृत्य परीक्षोत्तीर्णाः प्रायो गम्भीरसंस्कृतज्ञानशून्या आसन्। अयं दोषोऽधुनाऽप्यस्मदीयविश्व-विद्यालयेषु प्रचलति। अधुना परीक्षाया माध्यमेनाङ्ग्लभाषा

स्वीकृता नास्ति, परन्त्वध्ययनं त्वाङ्ग्लानुवादानामाश्रयेणैव भवति । तथाप्यनेन विधिनाधीतविद्येषु रामकृष्ण-भंडारकरः, कमलाशंकरत्रिवेदी, आनन्द-ध्रुवः, डा० बेलवेलकर इत्यादयो विशिष्टविद्वांसः समुत्पन्नाः, अनेनैव विधिना डॉ० भंडारकरेण त्रिवेदिमहोदयेन च लिखितानि पाठ्य-पुस्तकानि सुप्रसिद्धान्युपयोगीनि चासन् । आप्टेमहानुभावस्य संस्कृत-रचना कालेमहोदयस्योच्चतर-संस्कृत-व्याकरणमधुनाप्युपयोगितां बिभ्रतः ।

यदा स्वाधीनताप्राप्तेः प्रयासः प्रारभत, तदास्माकं पूर्वजानां मनस्याशासीत्, यत्स्वतन्त्रताप्राप्तेः पश्चात् संस्कृतं संस्कृतिश्च पुनर्जीवनं प्राप्स्यतः, भारतस्यातीतं च गौरवं पुनः स्थापितं स्यात्, परन्तु पाश्चात्यसंस्कृत्या विज्ञानस्य जागरणेन च वयं चमत्कृता अभूम । पाश्चात्यसम्पर्कस्य यावान् प्रभावः स्वाधीनताकाले प्रसरति, न तथाङ्ग्लानां शासनकालेऽपि । विज्ञानेनौद्योगिकगत्या च प्रभावितोऽस्माकं तरुणवर्गः प्राचीनसंस्कृतिमुपेक्षते, येन संस्कृतस्य पठन-पाठनं तनुतामुपयाति । सर्वकारः संस्कृतस्य पोषणाय प्रचाराय च यथाशक्यं प्रयतते, परन्तु तथापि संस्कृतस्य प्रचारस्तावान्न भवति; यावानस्माकं संस्कृतेर्जीवनायापेक्ष्यते, अत्र बहूनि कारणानि सन्ति । प्रधानं कारणं त्विदमेव, यद्वैज्ञानिकी शिक्षार्थकरी विद्यते, अपरं संस्कृतभाषायाः काठिन्यं बहुभिर्मन्यते । अस्योत्तरदायित्वं पण्डितेषु पतति । केचित् संस्कृतमतीवकठिनमिति निर्दिश्य स्वीयं परिश्रमप्राप्तं पाण्डित्यं चिख्यापयिषन्ति । छात्रेष्वपि भ्रान्तिरियं प्रसार्यते, यत्संस्कृतमतीवकाठिन्यमिति । केषाञ्चिदस्माकं पण्डितानां परम्परागतां पाठन-प्रणालीं व्यतिरिच्यान्या पाठन-प्रणाल्येव दृष्टिपथं न समायाति । स्वयं तेषां शिक्षायाः प्रारम्भः कौमुदीतोऽमरकोषतश्चाभवत्, अतोऽयमेव केवलं पन्थास्तेषां पुरतस्तिष्ठति, यदान्यां प्रणालीमनुसर्तुं ते प्रेर्यन्ते, तदा नासिकां भ्रुवं च संकोच्य कथयन्ति-किं भविष्यत्यनेन । परन्तु यदि संस्कृतस्य लोकप्रियत्वमिष्यते, प्रचारश्च काम्यते, तदा विभीषकजन्तुरूपेणास्य परिचयो न प्रदेयः, सरलः सुगमश्चायं विषय इत्येव प्रतिपादनीयः ।

अतो मम तुच्छसम्मत्या संस्कृताध्ययने प्रारम्भे कृते सत्येव विद्यार्थिनः संस्कृतेनैव भाषणादिकं कुर्युः । पाठनारम्भस्तु शिक्षकस्य शिक्षणकौशलपरतन्त्रः । यदि कक्षायां स्थितैः पदार्थैस्तत्रत्यैः स्पन्दनश्च संस्कृतस्य प्रारम्भः स्याच्चेदयं सुगमो विधिर्भवेत् । 'गच्छामि, उत्तिष्ठामि, प्रणमामि' इति प्रभृतिक्रियाणां प्रयोगः सारल्येन शिक्षयितुं शक्यते । अकारान्तेकारान्तशब्दानां प्रयोगः पञ्चदशदिवसेषु प्रथमलकारचतुष्टयस्य ज्ञानम्, पुल्लिङ्ग-नपुंसकलिङ्ग-स्त्रीलिङ्गशब्देषु प्रतिलिङ्गं द्वित्राणां शब्दानां सर्वासु विभक्तिषु परिज्ञानम् । प्रदर्शितदिशा भाषा व्याकरणं च युगपदेव परिज्ञेये भविष्यतः ।

संस्कृतस्य व्याकरणं बुद्धिं मस्तिष्कं च परिमार्ष्टि । स्व० श्रीरामकृष्ण भंडारकरः प्राह ज्यामित्या सह संस्कृत-व्याकरणं तुलयितुं शक्यते । यथेदं शास्त्रं पदार्थानामाकारकोणरेखादिकं परिज्ञापयाति

तथैव संस्कृत-व्याकरणं शब्दव्युत्पत्तिं महत्कौशलेन न शिक्षयति। यदीदं विज्ञायास्माकं विद्वांसो व्याकरणाध्यापने रोचकतां सुबोधतां चावलम्बेरन्, तदा विद्यार्थिनः संस्कृतं प्रति प्रचुरसंख्यायामाकृष्टा भवेयु। संस्कृतकक्षायां यथाशक्यं संस्कृतेनैवालपनीयम्, शब्दानां क्रियाणां चार्थाः सङ्केतेन गत्या च प्रकटनीयाः। अनया प्रणाल्या वागर्थौ सम्पृक्तौ स्यातां गत्यां पदार्थेन च सह संस्कृतशब्दानां सम्पर्कः स्थापितो भवेत्।

संस्कृतभाषायां यादृश्यः सूक्तयः, न तथा संसारस्यान्यासु भाषासु। एतासु काश्चित् श्लोकेषु, काश्चिच्च श्लोकांशेषु विद्यन्ते। शिक्षकाः श्लोकानां सरलसुबोधांशानां कण्ठस्थीकरणाय छात्रान् प्रेरयेयु। 'काकः काकः', 'पिकः पिकः', 'शैले शैले न माणिक्यं मौक्तिकं न गजे गजे' प्रभृति-सूक्त्यशाः षष्ठकक्षायामेव रोचेरन्। शनैः शनैश्च छात्राः संस्कृतेनैव परस्परं संवदेयुः। एतदर्थं सरलानि वाक्यानि प्रयोक्तव्यानि। 'त्वं कुत्र पठसि !' अहं संस्कृत-पाठशालायां पठामि। युष्माकं गुरुः कः ? अस्माकं गुरुर्विद्याधरशर्मा इतिप्रभृतिवाक्यान्युदाहर्तुं शक्यन्ते। संस्कृतभाषायां पत्रलेखनमपि शिक्षणीयमेतदर्थं प्राचीनशैली वर्तमान-शैली चाभ्यसनीया भवेत्। प्राचीनशैल्या वृद्धान् प्रति सम्मानं श्रद्धा च समुदेति आधुनिकी शैली सरला विद्यते।

इमां नूतनां शिक्षापद्धतिमात्मसात्कर्तुं संस्कृताध्यापकानां प्रशिक्षणमावश्यकं भवति। इदं च संस्थाभिः साधयितुं शक्यते। वर्तमान-प्रशिक्षण-विद्यालया एतदर्थं नोपयुज्यन्ते। तत्र संस्कृतस्य महत्त्वमपि नास्ति, नवीनां च प्रणालीं बोधयितुं शिक्षका अपि न नियुज्यन्ते। अयं प्रमोदस्य संतोषस्य चावसरो यत् दिल्ल्यां संस्कृत-प्रशिक्षण-महाविद्यालयः समस्थाप्यत, राजस्थानादपि केचिद् संस्कृत-पंडितास्तत्र प्रशिक्षितुमगमन्। मुख्यतोऽस्माकं राजस्थानस्य नवतरुणो विद्वान् डॉ० मंडनमिश्र एवास्य सत्प्रयासस्य श्रेयोभाक्। यद्येवं प्रतिप्रान्तं प्रशिक्षण-संस्थाः समस्थाप्येरन्, तदा संस्कृत-पाठन-प्रणाल्याः सरलता सुबोधता च संस्कृतमतीवलोकप्रियं सुगमं च कुर्यात्। एतदर्थं नवीनपाठ्य-पुस्तकानां नवीन-व्याकरणानां, विभिन्नविषयानधिकृत्य नवीन-सरल संस्कृतग्रन्थानां निर्माणं भवेत्। वर्तमानराजनीतिर्महाभारतं च, चाणक्यस्य, शुक्राचार्यस्य कामन्दकस्य राजनीतिश्च सरलभाषायां समन्विता स्याच्चेदतीवरोचको नवीनग्रंथश्च निर्मितो भवेत्। भूगोलेतिहास-विज्ञान-नागरिकशास्त्रप्रभृति-विषयानधिकृत्यापि सरल-पुस्तकानि निर्मातुं शक्यन्ते। यानि दशमीकक्षां यावत् संस्कृताध्येतृभिरवगमनीयानि भवेयुः। अमीषां ग्रन्थानां निर्माणं पाण्डित्य-प्रदर्शनं परिहाय पंचतंत्रस्य लेखकं विष्णुशर्माणं पुरस्कृत्य बाल-बोध-भावनया भवेत्।

राजस्थाने संस्कृतं वर्षाणां शतेभ्यः प्रोत्साह्यते, अस्माकं वर्तमानः सर्वकारोऽपि संस्कृतं प्रति रुचिं सहानुभूतिं च वहति। अतोऽस्मिन् राज्ये तथा सत्प्रयासाय समीचीनं वातावरणं वरीवर्ति। अतो वयं संस्कृत-भाषाया भाव्युन्नतिमधिकृत्य सप्रत्यया भवेम।



## राजस्थानसंस्कृतविद्यापीठस्य शिलान्यासः

भिल्लवाटनगरे सम्पन्नस्य राजस्थानसंस्कृत-सम्मेलनस्य द्वादशाधिवेशनस्य समये तत्रैव वर्तमानस्य संस्कृतविद्यापीठस्य भवनस्याधारशिला प्रदेशमुख्यमन्त्रिभिः सुखाड़ियोपाह्वैः श्रीमद्भिर्मोहनलालमहोदयैरुपाधीयतेत्युद्घोषयतां महान्नो हर्षसम्भारः।

नगरस्यास्याप्रतिमं सौभाग्यं यदेतदौद्योगिकोन्नत्या सार्धमेव विबुधवाणीसेवायामप्यनुरूपां प्रगतिं वितनोति, यच्च कविकुलगुरोः 'यस्मिन् द्वयं श्रीश्च सरस्वती च' 'इत्युक्तेरनुरूपमुदाहरणम्।

संस्कृतवाङ्मयोपचर्यायामग्रणीत्वम् वहति राजस्थानप्रदेशे सांस्कृतिकं पुनर्निर्माणमेवमेव च भारतीयभाषावर्गस्य जीवातुभूतां विबुधवाणीं जनमानसमन्दिरे प्रतिष्ठापनोद्देश्यात्, तदुद्यानविकसितानां साहित्यकुसुमानामामोदेन दिङ्मंडलं सुवासितं कुर्वन्नेष विद्यापीठः सर्वाभ्युदयहेतुकां गौरवान्वितां चास्मत्संस्कृतिं पुनरुत्थानकर्मण्यविरतां प्रेरयन्नास्ते। वसुतत्त्वनिधिमेदिनीमिते (१९५८) खिस्ताब्दे श्रीचन्द्रशेखरशास्त्रिभिः समारब्धेऽस्मिन् विद्यापीठे छात्राः षष्टिसंख्यापरिमिताः प्रवेशमलभन्त, अधुना सैव संख्या प्रायो द्विशतपरिमिता। मनोवैज्ञानिकदृष्टिमाश्रित्य संस्कृतेः संस्कृतस्य चाध्यापनं, तेनैव च साकं धार्मिकशिक्षणौद्योगिकशिक्षणस्य च प्रबन्धो येन छात्राणां जीवननिर्वाहस्सुकरो भवेत्, नवीनसाहित्यनिर्माणं, तथाविधाश्चानेकाः प्रवृत्तयो दरीदृश्यन्तेऽत्र विद्यापीठे।

राजस्थानसंस्कृतशिक्षासलाहकारमण्डलाध्यक्षैः श्रीलक्ष्मीलालजोशीमहोदयानामध्यक्षतायामकृत्रिमनिःस्वार्थसेवावृत्तिभिस्त्रिवेदीत्युपाह्वैः श्रीशिवकुमारमहोदयैरधुना सञ्चालितेनानेन विद्यापीठेन राजस्थानप्रदेशस्य महती सेवा विधीयते, विधास्यते चेत्याशास्महे। विद्यापीठनिवेदनमेवाङ्गीकृत्य १९६४ तमे खिस्ताब्दे अखिल-भारतीय-संस्कृत-साहित्य-सम्मेलनमहासमितेरायोजनमत्र समपाद्यत।

एवं च निरन्तरप्रगत्युन्मुखस्यास्य विद्यापीठस्यानुरूपभवनस्य प्राथमिकीमावश्यकतामाकलतयद्भिः सुरभारतीसमुद्धारार्थं बद्धकक्ष्यैर्गुणानुरागप्रवणैः श्रीसुखाड़ियामहानुभावैर्भवनस्य शिलान्यासो विहित इत्यस्य प्रभूतामायतिं द्योतयति।

एतत्सम्बन्धिचित्राणि आकरणस्य तृतीये पृष्ठे द्रष्टव्यानि

—:०:—

## गणाभ्युदयं नाटकम्

(पूर्वतोनुवृत्तम्)

लेखक—डॉ॰ हरिहर त्रिवेदी

देवी—हे पिनाकिन्, त्वमेव शरण्योऽस्मिन्विप्लवे!

भीमः— (प्रत्यागतचेतनः कर्णम् दत्वा) कोऽत्र भोः ? ज्ञायतां किमर्थोऽयं ध्वनिरिति। (स्वगतम्) ज्ञायते यत् कृतकुषाण-पराभवः कोऽपि सुहृदेवायातीति। विविधदिक्प्रस्थितैर्लब्धविजयैश्च सर्वैर्मित्रसेनानीभिरत्र पद्मावत्यामागन्तव्यं महोत्सवसम्पादानार्थमिति निश्चितमासीत्, सर्वे च गृहीतार्थाः कृताः।

अथ कोऽयमेत्य नववारिसंभृत-
स्तनयित्नुधीररसितेन हारिणा।
मम मानसं सपदि दावदग्धभू-
रुहकल्पमङ्कुरयुतं समञ्चति ॥१३॥

अप्ययं यौधेयगणप्रमुखो महासेनो भवेत् ?

कंचुकी— (प्रविश्य) विजयतां महाराजः देवी च। महाराज, यौधेयगणप्रमुखस्य भावमित्रो नाम यो राजचारः पूर्वमत्रागत आसीत् स महाराजदर्शनार्थी बहिस्तिष्ठति, कथयति च तस्य स्वामी महासेनो विजयपरिवृतः मद्रकुणिन्दार्जुनायनगणप्रमुखैः सार्धमितोऽभिमुखमायात्येवेति। सन्निहितश्चायम्।

भीमः— (साश्चर्यम् सौत्सुक्यं च) त्वरिततरं प्रवेशय।

देवी— विजयतां नागराजः। तेन मुनिवेषेण केनापि धूर्तेन प्रतारिता आस्म वयम् येन कथितं यत् महासेनो व्यापादित इति।

भीमः— एवं ममापि प्रतिभाति। इदानीं सर्वम् व्यक्तं भविष्यति।

कंचुकी— (निष्क्रम्य, भावमित्रेण सह पुनः प्रविश्य) महाराज एष स राजचारः।

भावमित्रः—(उपसृत्य) विजयतां महाराजः देवी च। महाराज, पंचनदप्रदेशे कुषाणान् पराभूयान्यैः गणराज्यप्रमुखैः सार्धं भवतां सुहृन्महासेनस्त्वरिततरमायाति। पश्यतु भवान् तं प्रासादपरिसरे सम्प्राप्तम्।

(नेपथ्ये शङ्खध्वनिः)

(संदर्श्य) तेनैवाध्मातस्य शङ्खस्य ध्वनिः श्रूयते।

भीमः— (निरूप्य सहर्षम्) अहो समायातो मे सुहृत्। (आसनादुत्तिष्ठति। सर्वे दृष्टास्तमनुकुर्वन्ति)।

महासेनः— (प्रविश्य अन्यैर्गणप्रमुखैः सह) पद्मावतीश, दिष्ट्या वर्धसे। अहो, नागमहिषी अपि अत्रैवास्ते। अभिवादये भवतीम्।

बलभूतिः- विजयेताम् भवन्तौ।

महासेनः- सुहृत्तम, वयमत्रागताः श्रवणसुखदां वार्तां श्रावयितुम्।

देवी — मुदावहमुदन्तमवगन्तुमुत्सुका ननु वयम्। कथयतु भवान्, सत्वरं कथयतु।

भीमः— क्रियातामासनपरिग्रहः। कथं खलु जितास्तेऽरातिहतकाः ?

महासेनः— आकर्ण्यतां यदि कुतूहलम् । एवमेतत् ।

प्रस्थातुकामानथ भारतीयान्
सैन्यान्विदित्वैव विहाय देशम् ।
सर्वेऽरयो दूरतरं प्रयाताः
मृगा यथा केसरिनादभीताः ॥१४॥

एवं च सिद्धमभीष्टम्, सम्पादितश्च मनोरथः ।

भीमः— (साश्चर्यम्) किम्, किम्, मित्रवर, किं कथयसि ? अपि कुषाणाः भारतात् पलायिताः ? किं सत्यमेतत् ?

महासेनः— अथ किम् ?

भीमः— नातः परं विस्मयावहम् यत् विनैव युद्धं विजयलाभः । सुहृद्वर, कथय कथय,

दृढं समभिघातिनः प्रहरणैकदीक्षाभृतः
विहाय किमु भारतावनितलं कुषाणा गताः ?

महासेनः—सत्यमेतत् ।

भीमः— विनष्टविषपादपं किमुत भारतप्रांगणम् ?

महासेनः—एवमेव ।

भीमः— अतो भरतभूतलात्
किमुत विद्रुता ईतयः ? ॥ १५ ॥

महासेनः—एतदप्यवितथम् ।

भीमः— मित्र, प्रियं नः । यतः

अभ्यर्णवर्तिभिररातिगणैः समन्तात्
युद्धे धृते युगपदेवकुषाणराजे ।
सद्यो विनिर्जितबले शक-नायके च
तैरुज्झिता सपदि भारतभूमिरेषा ॥१६॥

(नेपथ्ये जयध्वनिः)

(सौत्सुक्यम्)कः कोऽत्र भोः ? ज्ञायतां किमेतत् ।

प्रतीहारी—(प्रविश्य) विजयतां महाराजः । महाराज, समीरणोद्वेल्लितविजयपताका-निवहया मधुरमंगलध्वनिसंवलितजयनाद-मुखरितदिग्भागया धवलातपत्रनिवारिततपया कवलितरिपुयूथोत्फुल्लमुख-मण्डलभटापूरितया सेनयालंकृतोऽन्यतरः सुहृत्सेनानीः पूर्वस्या दिशः इतोमुखं प्रवर्तते । पुरोवर्तिना उज्जयिनीलाञ्छ-नाङ्कितपताकावाहिना च विभाव्यते यत् मालवगणप्रमुखः श्रीसोम एवायमिति ।

भीमः— (जालमार्गेणावलोक्य सहर्षम्)एवम् । प्राच्या दिश इत आगच्छन्नयं मालव-गणप्रमुखः श्रीसोम एव । यतः स वाराणसीस्थितं कुषाणोपरिकं जेतुं प्रस्थित आसीत् । सजलबलाहकगर्जित-मधुरेण च मंगलध्वनिना स ननु विजयसनाथ इति विभाव्यते ।

प्रतीहारी—पश्यतु महाराजः । सेनां नगर्या बहिः निवेश्यायमागत एव । सर्वे सौत्सुक्यं पश्यन्तः उत्थिताः ।

(ततः प्रविशति मालवगणप्रमुखः श्रीसोमः)

श्रीसोमः— (हस्तमुद्यम्य उपागम्य च) विजयतां नागराजः, नागमहिषी च । अहो, सुहृत्तमाः यौधेयमद्रकुणिन्दार्जुनायनप्रमुखा अपि सन्निहिताः ! विजयन्तां भवन्तः । विजयतां भरतावनिः ।

सर्वे— विजयताम् मालवगणप्रमुखः श्रीसोमः ।

भीमः — वयस्य, स्वागतं ते । अरातिनिषूदन, दिष्ट्या वर्धते भवान् । एते सर्वे विजयशीलाः खलु । एतदासनमलंक्रियताम् । भवद्विजयोदन्तं ज्ञातुं साभिलाषा वयम् ।

श्रीसोमः— शृण्वन्तु भवन्तः । मित्रवर, भवन्निदेशमनुतिष्ठन्नहं ससैन्यः वाराणसीं प्रस्थितस्तदा च तत्र संस्थितस्य वनस्परनाम्नो कुषाणोपरिकस्यावासः सेनया मे पर्यवष्टब्धः । स चैतत् ज्ञात्वैव युद्धाय सन्नद्धः । अस्य सैनिकाश्चाहमहमिकापराः धनुरेलीद्रुघणपरिघभिन्दिपालप्रासप्रभृतिभिस्तुमुलं सम्प्रहारमारेभिरे ।

भीमः— (सौत्सुक्यम्) ततस्ततः ?

श्रीसोमः—ततश्च मम सेनया सहसा तेषां वाहिनीपतिर्व्यापादितस्तदवगम्य सर्वेऽपि ते रणादपक्रान्ताः एवं च विजयं सम्प्राप्य पूर्वनिर्देशमनुसरन्नत्राहमागतः पद्मावत्याम् । किन्तु चिन्ताकुलोऽस्म्यधुना ।

भीमः -- (साश्चर्यम्) किमत्र कारणं भवेत् ? ज्ञातुकामा वयम् ।

श्रीसोमः — किं कथयामि मन्दभाग्यः ? यत्

सेनया मम जितो वनस्परः,
न्त मे तु दुहिता तिरोहिता ।
युद्ध एव, मम हृत्ततोम्बुजं
धारयाभिहतमातपे यथा ॥ १७ ॥

न ज्ञायते तस्याः कापि वार्ता । व्याकुलेन च मया दिशि दिशि भृत्याः प्रेषितास्तदुदन्तमवगन्तुम् ॥

भीमः-- (सोद्वेगम्) कथमेतत् ? कथयतु सविस्तरं भवान् ।

श्रीसोमः-- मम कन्यका इन्दुलेखा समरशूरा शरसन्धाननिपुणा सखीभ्यां वसुमतीमधूलिकाभ्यां पृतनाया अङ्गमेकं सञ्चालयन्ती मामन्वगादस्मिन्समरे । सा च

क्षयकालनिशेव सङ्गरे
करवालेन कुषाणसैनिकान् ।
भरतावनिसंस्कृतेररीन्-
अकरोदाशुतरं यमातिथीन् ॥१७॥

भीमः -- पितुरनुकरणं युक्तमस्याः । ततस्ततः ?

श्रीसोमः — कुषाणोपरिकपरिभवानन्तरमेव वेत्रवत्यास्तीरप्रदेशे सहसा रिपुभिरुपद्रुतम्, तमुपद्रवं शमयितुं सा मया महत्या सेनया सह तत्र प्रेषितासीत् । प्रत्यावृत्ताभ्यामुमाभ्यामपि सखीभ्या-

महं ज्ञातवान् यत् तस्मिन्नुद्देशे तयारयो जिताः, अपि तु विजयानन्तरमेव सा सहसैवादृश्या संजाता। सा मां प्रतीक्षमाणात्रागता स्यादित्यासीन्मे वितर्कः। किन्तु,

पुनश्च कुत्रापि समुत्थिता वाऽ-
रयोऽस्मदीया अथ तत्प्रदेशे।
वितर्कयन्नित्थमनेकधाहं
चिन्तातुरस्तामनवेक्षमाणः ॥१८॥

महासेनः— (जनान्तिकं बलभूतिं प्रति) वयस्य एते तु ते एव सखीनामनोति वर्धते मे कुतुहलम्। अपि च भवतातूज्जयिन्यां कथितमासीत् यत् मालवगणप्रमुखस्य दुहितुर्नाम पुत्तलिकेति; श्रीसोमस्तु स्वदुहितरम् इन्दुलेखामभिदधाति। अतो ज्ञायते या इन्दुलेखा मया तत्राऽऽक्रीड़े दृष्टा, सैवेन्दुलेखास्य पुत्री राजदारिकैव। कथं वा भवान् मन्यते?

बलभूतिः— एतत्सर्वं कौतुकावहं खलु। भवतु, ज्ञातं भविष्यत्येवाधुना।

भीमः— (विचार्य) चित्रमेतत् यत् सा न केवलं वीरपुत्री एवापि तु स्वयमेवाश्वबलसंचालनपटुः। कुत्र सा गता भवेदिति सत्वरं ज्ञातव्यम् यतो हि निसर्गकातरः स्त्रीजनः। कः कोऽत्र भोः?

प्रतिहारी— (प्रविश्य) विजयतां देवः।

भीमः — कोमुसे, उच्यतां मद्वचनादमात्यः जवनिकमश्वावारं सम्प्रेष्य ज्ञायतां का वार्ता वेत्रवत्यास्तीरभूमेरुपद्रवस्य, विशेषतश्च मालवराजकन्यामन्वीयमानायाः सेनायाः, इति। सत्वरतममेतत् ज्ञातुमिच्छामि।

प्रतिहारी— यदाज्ञापयति महाराजः (निष्क्रान्ता)।

भीमः— इतस्तावत्। एतदवगन्तुमुज्जयिन्यां जवनोऽश्वावारः सत्वरं प्रेष्य इति च कथनीयम्।

प्रतिहारी—तथा। (निष्क्रम्य पुनः प्रविश्य) महाराज, सेनापतिः रुद्रवर्मा कयाचिद् बालया सह इत एवाभिवर्तते, भणति च सा तस्य कृतकतनयेन्दुलेखेति।

भीमः— त्वरिततरं प्रवेश्य।

श्रीसोमः— (सहर्षम्) किं मम दुहितेन्दुलेखा? कुत्र सा? (सर्वे साकूतं पश्यन्ति। ततः प्रविशति नागसेनापतिः रुद्रवर्मा इन्दुलेखा च)। (इन्दुलेखा द्रुततरमुपगम्य श्रीसोममालिंगति वेपमाना, श्रीसोमः प्रेमाश्रुसंवृतनेत्रः; अन्ये च सर्वे साकूतं पश्यन्ति, महासेनः भावमित्रमीक्षते)। (प्रकाशम्) वत्से, चिरं जीव (भीमं प्रति) सुहृद्वर,

कलानिधिर्ग्रहवरनाद्धि निस्मरन्
धरातलं पुनरत्रभसयेद्यथा।
तथैव सोच्छ्वसितहृदं मुदान्वितं
करोति मां नयनपथं गता पुनः ॥१९॥

जाते किमेतत् ? कुत्र विलम्बितं त्वया ?

इन्दुलेखा— तात, (रुद्रवर्माणमुद्दिश्य) त्वमिव दर्शितस्नेहोऽयं महाभागोऽपि मे पिता; न केवलं भयादेवापि तु मृत्योस्त्रातायं मम। विजयानन्तरमहं सुखं प्रसुप्ता गतरात्रावेव केनापि राक्षसेन नीता कालिकायतने च प्रबुद्धा। यद्ययं मे पितृसमस्तत्रनागमिष्यत् तदा तस्य कृतान्तस्य तीक्ष्णासिधारया शकलीकृता अभविष्यम्।

(सर्वे साकूतं पश्यन्ति)।

भीमः— धन्योऽसि रुद्रवर्मन्। किन्त्वेतत्सर्वमतिविस्तरतो ज्ञातुमिच्छामः।

रुद्रवर्मा— शृण्वन्तु भवन्तः। वेत्रवत्याः पूर्वप्रदेशे दशार्णा नाम काचिन्नदी। तस्यास्तटभुवि पर्वतैकदेशे बिभीषिकासंकुलायां शून्याटव्यां श्मशानपरिसरे चामुण्डायतनम्। तत्र कापालिकानामावासः। ते च निशीथे सुभगं स्त्रीरत्नं चामुण्डायै बलिमर्पयन्ति, तस्माच्च सिद्धिमामनन्ति ते पापाध्माताः।

भीमः— किं तत्र ? (सर्वे साश्चर्यमाकर्णयन्ति)

रुद्रवर्मा— कुषाणान्विजित्य परावृत्तेन मया तस्मिन्प्रदेशेऽवगतं यत् धूम्राक्षनाम्ना कापालिकेनेयं बाला व्योमयानेनापहृत्य तत्र नीतेति।

श्रीसोमः— इन्दुलेखे, कथय सविस्तरम्।

इन्दुलेखा— तात, अहं तु केवलं जाने यद्रात्रौ सखीभ्यां वसुमतीमधूलिकाभ्यां सह सुप्ता प्रातस्तस्मिन्नरण्ये प्रबुद्धा आसम्। तत्र च कश्चिद् भीषणाकृतिः कौणप इवात्मानं दर्शयन् उद्दन्तुरः संमुखमागत्य रक्तवसने मम हस्ते निक्षिप्याकथयत् एते परिधाय मामनुसरेति।

भीमः— अहो, कष्टावहमेतत् श्रुतमपि। ततस्ततः?

इन्दुलेखा— (भयं नाटयति) ततोऽहं क्रन्दितुमारेभे।

देवी— भवति, अधुना न भेतव्यम्। अतिक्रान्तमेतत् खलु।

इन्दुलेखा— ततश्च मम क्रन्दनमाकर्ण्यायं महाभागस्तेन पथा गच्छंस्तत्रागतः, तं च दुष्टं शस्त्रेण व्यापाद्य मां पितेवारक्षदत्रानीतवांश्च। एवं च जीवनं पुनरागत्य तातस्य सख्योश्च दर्शनं लभेऽस्य महाभागस्य प्रसादेन। (महासेनं साकूतं पश्यति)

महासेनः— (बलभूतिं प्रति जनान्तिकम्) सखे, सैवेयमिन्दुलेखेत्यधुना निश्चितं भवति। एते चास्याः प्रियसख्यौ। (प्रकाशम्) मित्रवर, श्रीसोम, दिष्ट्या वर्धसे दुहितृसमागमेन।

भीमः— एवं वयं सर्वेऽपि मन्यामहे।

श्रीसोमः— वत्से, इत इतो नागाधिपतिं नागमहिषीं चाभिवादयस्व।

इन्दुलेखा— (नमस्कृत्य) महाराजं महाराज्ञीं चाभिवादये।

देवी— पतिं लभस्वात्मगुणानुरूपं
गौरी यथा चन्द्रकलावतंसम्।

भीमः— दर्पोद्धतारातिनिषूदनाद्यः
पुरारिनाम्ना प्रथितस्त्रिलोक्याम् ॥२०॥

सुहृद्वर श्रीसोम, यदि भवतोऽभिमतम्, अस्मिन्नेव मंगलावसरेऽन्यदपि कथयामि।

श्रीसोमः— कथयतु, कथयतु भवान्। अभिमतं नो भवेदेव।

भीमः— भवत एवावगतमासीन्मया यदुज्जयिन्यां ते दुहितुर्यौधेयगणप्रमुखस्य महासेनस्य चान्योन्यदर्शनमभूदिति। तदाप्रभृत्येव चानयोः प्रेमवृद्धिः। अनिविष्टश्चासौ। तदनयोर्विवाहः प्रीतिकरो भवेदिति मन्ये।

(महासेनः इन्दुलेखा चान्योन्यमवलोक्य भूमिं पश्यतः)

महासेनः— (बलभूतिं प्रति जनान्तिकम्) मित्रवर, अस्या नामधेयमन्तरेण तु मे कौतूहलं न शाम्यति तावत्। किन्तु—

यस्मिन्क्षणे पूर्णसुधांशुकल्प-
मियाय मे नेत्रपथं तदास्यम्।
तदाप्रभृत्येव मनो मदीय-
मास्ते यथोर्मिक्षुभितः पयोधिः ॥२१॥

बलभूतिः— (जनान्तिकम्) भवतु, पृच्छाम्येव। (प्रकाशम्) सुहृद्वर श्रीसोम, स्मरति भवान् यदुक्तवान् स्वकन्यां महासेनाय दातुमभिलषे इति? तस्याश्च नाम भवता पुत्तलिकेति निर्दिष्टमासीत्?

श्रीसोमः— एषा सैव। पुत्तलिकेत्यस्या अपरं स्निग्धम् नामधेयम्।

भीमः— (सस्मितम्) एवं च महद्रहस्यं विवृतं भवति। मित्रवर, श्रीसोम, तवाभिप्रेतं श्रोतुमिच्छामि।

इन्दुलेखा— (नेत्रेऽवनम्य स्वगतम्) किं न खलु साम्प्रतं तातो भणति। (सख्यौ पश्यति)।

वसुमती— (जनान्तिकम्) प्रियसखि, स्मरसि यन्मयोक्तं 'यद्यत्र तातः सन्निहितो भवेत्' इति? किं न कुप्यसीदानीम्?

श्रीसोमः— (क्षणं निध्याय सहर्षम्) क एतस्मिन्मंगलावसरे भवद्वचनं लंघयेत्? सम्बन्धश्चैष उभयराज्ययोरभ्युदयावहः। (देवीं प्रति) देवि, भवत्यानुमतः इच्छाम्येनां मम जीवितं यौधेयगणप्रमुखाय महासेनाय प्रतिपादयितुम्।

देवी— किं वा महासेनो मन्यतेऽत्र?

महासेनः— (भूमौ दत्तदृष्टिः स्वगतम्) किन्नु खल्वधुना वक्ष्यामि? अहं त्वेतदेव जाने यत्

समवलोक्य तदीयमुखांबुजं
स्फुटितकुन्दनिभैर्दशनैर्युतम् ।
मम मनःभ्रमरो रसलोलुप-
स्तदभिगन्तुमसौ त्वरतेऽधुना ॥२२॥

बलभूतिः— देवि, नववरो लज्जातुरो भवतीति लोकव्यवहारः । अयं भणति 'अनुगृहीतोऽस्मी'ति ।

भीमः— सम्पूर्णा अस्माकं मनोरथाः । सत्वरमेवानयोर्विवाहः संपादनीयः ।

वसुमती— एवमेव ।

भीमः— प्रियं नः ।

एकाश्मना स्यात् द्विविहंगवेधः
यदुच्यते तच्चरितार्थमत्र ।
स्वतन्त्रतां भारत एष नीतो
विवाह एषोऽपि मुदावहः स्यात् ॥२३॥

देवी— दिष्ट्या वर्धते मे स्वामी पद्मावतीशः । यौधेयगणप्रमुख, वर्धताम् भवानपि । जयोऽस्तु सर्वेषां समवेतानाम् ।

भीमः— महाराज्ञैव कृतमभिनन्दनं बहु मन्ये ।

श्रीसोमः— देवि, एतत् सर्वं भारतलक्ष्मीस्वरूपायास्तवैव प्रसादः यदस्मिन् स्वतन्त्रतासंग्रामे विनैव रक्तपातमस्माकं विजयलाभः । यतः—

जयस्तु यः शत्रुवधादवाप्यो
रक्तप्रवाहात् मलिनः स नूनम् ।
तस्मात् प्रशस्यो विजयः स एव
शस्त्रप्रयोगेण विना य आप्तः ॥२४॥

महासेनः— अथ च-

अहिंसया सत्यबलेन काम्यं
सम्पादनीयं सकलं च यत्र ।
स पुण्यदेशो जयताममर्त्य-
सेव्यस्त्रिलोक्यां ननु भारताख्यः ॥२५॥

भगवति, इदमप्यस्तु तव प्रसादात्–

अपगतरिपुशंकं भारतं देवि, भूयात्
दिशि दिशि गणराज्ये मोदमायान्तु लोकाः ।
अविरलसुखमूलं सर्वशान्तिप्रदायि
द्रुततरमभितः स्वाराज्यमीयात् समृद्धिम् ॥

अपि च– ( सर्वे सम्मिलिताः गायन्ति )

(मालव-रागेण त्रितालेन च गीयते)

जयतुतरां भरतावनिरेषा ।
ईतिभीतयो यान्तु विनाशम्,
सिद्धिरविकला यातु सकाशम् ।
गणराज्यं सुतरां च विकासम् ।
सस्यरसैः परिपूरितधरणी
प्रतिपलमेतु विलासम् ।
सत्यामोघमंत्रतरुशोभितसर्वोदयफलभूषा ।
पूर्णा भवतु मनीषा ।
रम्यवनैर्निर्झरतरुकुमावलिभिः कृतबहुवेषा ।
जयतुतरां भरतावनिरेषा ॥२७॥

( निष्क्रान्ताः सर्वे )

❀ समाप्तमिदं नाटकम् ❀

# राजस्थान-संस्कृत-साहित्यसम्मेलनम्–(विशेषः)

अस्मिन्विषयेऽस्मिन्नेवाङ्के किञ्चिद्विज्ञापितमस्माभिः। एतत् संस्थानं सार्वजनिकमस्ति, जनतन्त्रप्रणालीं चानुसरन्नास्ते। पुस्तकालयानां, वाचनालयानां, ग्रन्थादीनां प्रकाशनस्य, प्रचार-कार्यस्य, विदुषां मनीषिणां च सम्मानस्य, परीक्षासञ्चालनस्य च कृते विविधा विधीयन्ते यत्नाः। संस्थानान्तर्गतानां मण्डलानां प्रगतिविवरणं चाधोदर्शितया सूच्यावगम्यते—

| मण्डलस्थानम् | अन्तर्गतक्षेत्राणि | सदस्य-संख्या |
| --- | --- | --- |
| जयपुर | जयपुर, अलवर, भरतपुर, सवाई माधोपुर | ६४६ |
| अजमेर | सीकर, झुँझनू, अजमेर, टोंक | ५२५ |
| जोधपुर | पार्श्वक्षेत्राणि | ८०० |
| बीकानेर | ,, | ३६३ |
| कोटा | ,, | १०० (प्रायः) |
| उदयपुर | ,, | १५० ,, |
| | योग = | २५८७ |

संस्थानस्य प्रधान-मन्त्री जोशीत्युपाह्वः श्रीमोतीलाल-शर्मास्ति। विशेषपरिचयप्रदो लेखस्तेनैव सोत्साहेन महानुभावेन सम्मेलनस्यास्य भीलवाड़ानाम्निनगरे सम्पन्नस्याधिवेशनस्यावसरे प्रकाशितायां स्मारिकायां प्रकाशितम्; तस्माच्च सौजन्य-प्रदर्शनपूर्वकमत्रैतत्प्रदर्श्यतेऽस्माभिः।

× × ×

भीलवाड़ानगरेऽस्मिन्नेव हायने सम्पन्नस्य राजस्थान-संस्कृत-साहित्यसम्मेलनस्य स्वागतोपाध्यक्षाः प्रसिद्धाः उद्योगसञ्चालकाः भारतीयसंस्कृतिसमर्थकाः श्रीलक्ष्मीनिवास-झुंझुनुवालामहोदया आसन्। तैः सम्मेलनाधिवेशनस्यापि स्वागतोपाध्यक्षत्वमुररीकृत्य महान् सहयोगः प्रदत्तः। वस्तुतस्तेऽस्माभिः संस्कृतानुरागिभिरभिनन्दनीयाः।



# विविध-विषयम्

[ सम्पादकीयम् ]

## विद्यापीठ-सुहृदां विदेश-यात्रा

केन्द्रीयशिक्षामन्त्रालयस्य संयुक्तशिक्षासचिवः जोशीत्युपाह्वः श्रीलक्ष्मीनारायणमहोदयः (एल्०ओ० जोशी) मार्च-मासस्याष्टमे दिने प्रभातमंगलवेलायां वायुयानेन शिक्षासम्बन्धिन्यै यात्रायै जापान-देशं प्रातिष्ठत्।

'यूनेस्को' इति नामधेयया संस्थयाऽऽयोजिते एशियान्तर्गत-राष्ट्राणां शिक्षासम्मेलने श्रीजोशीमहानुभावाः भारतीयप्रतिनिधिमंडलस्य नेतृत्वं तत्र विधास्यन्ति, तस्मिंश्च देशे समाजस्य, प्रौढ़ानां शारीरिक्याश्च शिक्षायाः कार्यसञ्चालनस्याध्ययनं च करिष्यन्ति। देशे विश्रुता एते शिक्षाशास्त्रिणोऽखिलभारतीय-संस्कृतसाहित्यसम्मेलनस्य सोत्साहाः सदस्याः, विद्यापीठस्य निकायस्य च सदस्याः तत्त्वतस्त्वस्य संस्थापकाःसंरक्षकाश्चेति हर्षभृतो मंगलमेतेषामाशंसामहे, यथा—

**विद्यापीठहितावहा भवतु वो**
**यात्रा शुभाशंसिनी। इति।***

## विद्यापीठ-समाचाराः

विद्यार्थिन्याः सम्मानम्—अखिलभारतीय विद्यापीठे न्यायशास्त्रिकक्षायामधीयानायाः डॉ० सरोजदेवीनाम्न्याः हिन्दी-संस्कृतयोः एम्० ए० उपाधिमावहन्त्याः दिल्ली-कन्यामहाविद्यालयेऽध्यापिकापदमधितिष्ठन्त्या अस्मिन्वत्सरे दिल्लीस्थया श्रीदालमीया-पुरस्कारसमित्या तस्याः 'प्रबोधचन्द्रोदयविमर्शाख्यं निबन्धं सम्यक्परिशील्य सन्तुष्टया रूप्यकपञ्चशत-प्रदानरूपेण पुरस्कारेण सम्माननं व्यधायीति सप्रमोदं निवेदयामः।

सुरभारत्याः प्रचारणं प्रसारणं च लक्ष्यीकृत्य १३-२-६५ दिनस्य सायंकाले दिल्लीविश्वविद्यालय-संस्कृतविभागप्रवक्तृमहोदयानामध्यक्षत्वे इन्द्रप्रस्थप्रदेशीयोच्चतरमाध्यमिकविद्यालयस्थच्छात्राणां वादविवाद-प्रतियोगिता सुसम्पन्ना। तत्र 'भारते भातु भारती' विषयमवलम्ब्य बालका बालिकाश्च स्वं स्वं वाक्पाटवं प्रादर्शयन्। अत्र दरियागंजस्थोच्चमाध्यमिकविद्यालयीये बालिके, प्रथम-द्वितीये निर्धारिते, मद्रासीउच्चतरमाध्यमिकविद्यालयस्य च छात्रस्तृतीयं स्तरं प्राप्तवान्।

फ़र्वरीमासस्य पंचविंशतितारिकायां श्रीमतां रामस्वामिविद्वद्वरेण्यानां सभापत्ये देहलीप्रदेशीयान्तर्महाविद्यालयविवादप्रतियोगियाकार्यक्रमः सम्पन्नः। तत्र प्रथमद्वितीयौ विश्वनाथमहाविद्यालयच्छात्रौ समास्तामिन्द्रप्रस्थकन्यामहाविद्यालयच्छात्रा च तृतीयतां गता। अत्र 'ध्रियते यावदेकोऽपि रिपुः

* श्रीमन्तो जोशीमहोदयाः जापानदेशात् मार्चमासस्य २१ दिनांके प्रतिनिवृत्ताः। तेषां यात्राविषयकं वृत्तमागामिन्यंके प्रकाशयिष्यते इत्युदीरयन्तो वयं तेषामभिनन्दनं कुर्मः।

स्तावत् कुतः सुखम्' इति विषय आसीत् ।

मार्चमासस्यैकोनत्रिंशद्दिने गुजरातविश्वविद्यालयान्तर्गतशिक्षाविभागस्य प्रवक्तृमहोदयानां श्रीमतां जगदीशदवेमहाभागानां 'प्रशिक्षणवाङ्मये समवाय' इत्यस्मिन् विषये सारगर्भितं भाषणमभूत् विद्यापीठे ।

२-४-६५ दिवसेऽत्र विक्रमनववर्षसमारम्भप्रयुक्तः समारोहकार्यक्रमः श्रीमतां मोलिचन्द्रमहोदयानामध्यक्षत्वे सुसम्पन्नः । पूर्वं वैदिकं मङ्गलाचरणं, ततोऽध्यक्षमहोदयाः भगवत्याः सश्रद्धं पूजामकुर्वन् । तदनन्तरमध्यक्षमहोदयैः संक्षिप्ते भाषणे संस्कृतेः कर्मणश्च घनिष्ठः सम्बन्धः प्रदर्शितः । तेषां मते, अस्यां दिशि विद्यापीठः प्रकाशस्तम्भवदिति प्रमोदावसरः । अन्ते च धन्यवादप्रदर्शनपूर्वकं सम्मिलितैरध्यापकैश्छात्रैश्च विद्यापीठसमुन्नत्यै प्रयत्ना भवन्त्वस्माकमिति प्रतिज्ञा विहिता ।

५-४-१९६५ दिने शर्मण्यदेशस्य जीना-विश्वविद्यालये भाषाविज्ञानस्य प्राध्यापकानां डॉ० हैरीस्पिज र्टमहोदयानां विद्यापीठे शुभागमनमभूत् । सामूहिकवेदमन्त्रोच्चारणेन तेषां स्वागतं विधाय विद्यापीठस्य निर्देशकैः श्रीमण्डनमिश्रमहानुभावैः 'एष विद्यापीठः स्वस्य चतुर्थपंचवर्षीययोजनायामन्तर्राष्ट्रीयसंस्कृतसंस्थानरूपेण विकसितः स्यादित्यस्माकं प्रयत्नाः' इत्युद्घोषितम् । संयुक्तशिक्षासचिवैः श्रीलक्ष्मीनारायणजोशीमहोदयैरभ्यागतानां स्वागतं विहितम् । अस्मिन्नवसरे सम्मिलितेभ्यो धन्यवादपुरस्सरं, भारतशार्मण्यदेशयोः सांस्कृतिकसम्बन्धानां प्राचीनतां प्रदर्शयद्भिः स्पिज्बर्टमहोदयैः सुरभारत्या अन्तर्राष्ट्रीयमहत्त्वं प्रतिपादितम् । अस्मिन्नेवावसरे भारते स्थितेन शार्मण्यदेशीयेन सांस्कृतिक परामर्शदात्रा श्री श्रून्के-महोदयेन सुरभारत्याः हृदयस्पन्दनसामर्थ्यं संगीतेन च सार्धं सम्बन्धो योजितः ।

८-४-१९६५ दिवसे एषामेव स्पिज्बर्टमहानुभावानां 'गणित-प्रक्रिया पाणिनिश्चेति विषये भाषाविज्ञानमवलम्ब्य विद्यापीठे पाण्डित्यपूर्णं व्याख्यानमभूत् । अस्मिन्नेवासरे भारतीय-संस्कृतेः समर्थकानां श्रीलक्ष्मीनारायणजोशीमहोदयानां शैक्षणिकविषयमधिकृत्य जापानदेशात् प्रतिनिवृत्तानामभिनन्दनं विहितम् । तैश्च तस्मिन्देशे स्वीया अनुभवा हृदयग्राहिणा विधिना वर्णिताः । समारोहस्याध्यक्षता केन्द्रीयोपशिक्षामन्त्रिभिः विबुधवाण्यां बद्धादरैः श्री भक्तदर्शनमहानुभावैरक्रियत ।

## बालचरशिक्षणशिविरम्

विद्यापीठ-प्रशिक्षण-महाविद्यालयीयप्रशिक्षार्थिनां बालचर-शिक्षक-शिविरं फेब्रुवारी-मासे श्रीरामशंकर त्रिपाठीनामध्यक्षत्वे नियोजितमासीत् । तत्र द्वाचत्वारिंशत्प्रशिक्षार्थिभिः प्रशिक्षणं गृहीतम् । शिविरस्योद्घाटनं कुर्वता माननीयेन श्रीमता चे० रा० पट्टाभिरमन्‌महोदयेन संस्कृतभाषाया राष्ट्रियमहत्त्वं

संस्कृतज्ञानां च राष्ट्रनिर्माणे कर्तव्यं विशदयता एतादृशशिविराणां महत्त्वं प्रकाशितम्।

प्रशिक्षणसमारोपश्च दिल्लीप्रशासनशिक्षानिदेशकानां श्रीविश्वम्भरभट्टमहोदयानामभिभाषणेन सम्पन्नम्। तत्र चाध्यक्षीयभाषणं कुर्वता तेन महानुभावेन विद्यापीठस्यास्य कार्याणां प्रशंसनपूर्वकं संस्कृतविदुषामस्मिन्प्रथम एव शिविरे प्रदर्शितस्योत्साहस्य प्रशंसा विहिता, आशासितं चेदं शिविरं बालचरसंस्थाया ऐतिह्ये नवीनं योगदानं विधास्यतीति।

**शताब्दी-ग्रन्थः**

अखिलभारतीयसंस्कृतविद्यापीठेन प्रकाशयितुमारब्धस्य विश्व-संस्कृतशताब्दी-ग्रन्थस्य प्रथमे जम्बू-काश्मीरसम्बद्धे भागे सार्धशतत्रयी पृष्ठानां मुद्रिता वर्तते, शतं तु तावदवशिष्यते। द्वितीयस्य राजस्थानसम्बद्धस्य भागस्य सम्पादनकार्यमध्यनेन मुद्रणेन सह प्रचलति। राजस्थानीया विद्वांसस्तावदभ्यर्थ्यन्ते तत्रत्यानां संस्कृतपोषकाणां, संस्कृतसंस्थानां, संस्कृतग्रन्थानां, संस्कृतविदुषाञ्च वैक्रमविंशाब्दीसम्बद्धानां परिचयान् प्रहेतुम्।

**विज्ञापनम्**

संस्कृतरत्नाकरस्य अप्रैलमासाङ्कः प्रशिक्षणाङ्को भविष्यति, तत्र च प्रसिद्धानां प्रशिक्षणकोविदानां विभिन्नेषु विषयेषु निबन्धाः प्राकाश्यं नेष्यन्ते। अयमङ्कः प्रशिक्षणविद्यार्थिनां नितान्तं संग्राह्यः स्यात्।

———



## शोक-समाचारः

श्रीहरगोविन्दतनुजन्मनां मेधावतां गोविन्दलालभट्टानां वयसो द्विषष्टितमे वर्षे वर्तमानानामाकस्मिकनिधनमवबुध्याविकलं विद्वत्कुलमतलस्पर्शिन्युपप्लवोदन्वति सहसा निमग्नमभूत्। बटोदरा-निवासिन एते प्रकाण्डपण्डितास्तत्रैव वर्तमाने महाविद्यालये दीर्घकालपर्यन्तं संस्कृतस्य प्राध्यापकपदमलंकृत्य, ततो निवृत्ता अधुना प्राच्यविद्यासंशोधनविभागे रामायणस्य समीक्षितसंशोधनात्मके सम्पादनकर्मणि स्वात्मानं विनियोजयन्त आसन्। संस्कृतसाहित्याभिवृद्धये, विशेषतश्च श्रीवल्लभाचार्यप्रवर्तिते शुद्धाद्वैतसम्प्रदाये तैर्महान् प्रयत्नोऽक्रियतेति सर्वविज्ञातम्।

गुर्जरभाषायामपि लब्धख्यातिभिरेतैर्विचक्षणैः रचितेषु ग्रंथेषु वल्लभाचार्यव्याख्यासहितं भागवतपुराणं राज्याभिषेकग्रंथश्च विशेषतो निर्देशमर्हतः।

बहवश्छात्रास्तैरध्यापिताः, अनेके चानुसंधानकर्मणि तेषां निर्देशमाप्नुवन्। भारतराष्ट्रपतिसम्मानं च तैरधिगतमासीत्। तेषां कायोत्सर्गस्तु दौर्भाग्यमेव।

विप्लवमेनं सोढुं सन्तप्तेभ्यः कौटुम्बिकजनेभ्यो जगन्नियन्ता धैर्यम् यच्छेत्, दिवंगतानां च तेषामात्मा शान्तिसुखमनुभवेदिति प्रार्थ्य विरमामः।



स्वागतमन्त्रि-श्रीचन्द्रशेखरशास्त्रिण.



सं० स्वागतमन्त्रि-श्रीशिवकुमारशर्मणि:



सुखाडियाह्वयैर्मुख्यमन्त्रिभिर्मोहनाभिधैः ।
विद्यापीठस्य गेहस्य शिलान्यासो विधीयते ॥

# संस्कृतरत्नाकरः

(मासिकम्)

समाचारपत्र-पञ्जीबन्धने (केन्द्रीय) अधिनियमस्य (१९५६) खिस्ताब्दे संशोधितस्य च एको नविंश (१९) धारानुसारेण मासिकस्य-'संस्कृतरत्नाकरस्य' स्वामित्वादि-सम्बन्धे निम्नलिखि विवरणं प्रकाश्यते—

प्रपत्र-संख्या—४

| | |
|---|---|
| (१) प्रकाशनम् | ··· दिल्ली-७ |
| (२) कदा प्रकाश्यते | ··· प्रतिमासम् |
| (३) मुद्रकस्य नाम | ··· डा० मण्डनमिश्रः शास्त्री |
| राष्ट्रियता | ··· भारतीयः |
| स्थान-संकेतः | ··· धर्मप्रेस, कमलानगरम्, दिल्ली-७ |
| (४) प्रकाशकस्य नाम | ··· डा० मण्डनमिश्रः शास्त्री |
| राष्ट्रियता | ··· भारतीयः |
| स्थान-संकेतः | ··· अखिलभारतीयसंस्कृत-साहित्य-समेलनम् |
| | ··· २३/३ शक्तिनगरम् दिल्ली-७ |
| (५) सम्पादकस्य नाम | ··· डा० मण्डनमिश्रः शास्त्री |
| राष्ट्रियता | ··· भारतीयः |
| स्थान-संकेतः | ··· अ० भा० संस्कृत-साहित्य-समेलनम् |
| | १३/३ शक्तिनगरम्, दिल्ली-७ |
| (६) पत्रस्य स्वामिनां द्रव्यराशेः प्रतिशतम् एकस्मादधिकांशभागिनां वा नामानि संकेताश्च | अखिल भारतीय-संस्कृत-साहित्य-सम्मेलनम् १३/३ शक्तिनगरम् दिल्ली-७ |

मया डा० मण्डनमिश्रशास्त्रिणा समुद्घोष्यते, यदुपरि प्रकाशितं विवरणं ममाभिज्ञताविश्वासानुसारेण शुद्धमिति।

दिनांक—२० मार्च ६५ ई०

मण्डनमिश्रः शास्त्री
(प्रकाशकस्य हस्ताक्षराणि)

प्रकाशकः—डा० मण्डनमिश्रः महामन्त्री—अ.भा. संस्कृतसाहित्यसम्मेलनस्य
मुद्रकः—धर्मप्रेस १०३ ए कमलानगर, दिल्ली—७

# संस्कृत रत्नाकरः

अखिल-भारतीय-संस्कृत-साहित्य-सम्मेलनस्य विविध-विषय- विभूषितं प्राचीनतमं मुखपत्रम्



सम्मेलनस्य कार्यवाहक-सभापति-महोदयाः
भारत सर्वकारस्य
सूचना एवं प्रसारण मंत्रिणः
देशस्य समाचार-व्यवस्थायाः पत्रकारितायाश्च
नव-निर्माण-कार्येषु तत्पराः एवं
गुट निरपेक्ष देशानां संवाद संघस्य
निर्मातृमहाभागा
**श्री विद्याचरण शुक्ल महोदयाः**





## विभिन्नराज्यसर्वकारैः राजकीयानां सार्वजनिकपुस्तकालयानाँ कृते "संस्कृत-रत्नाकरः" स्वीकृतः

| | |
|---|---|
| १. केरल सर्वकारः | केरलसर्वकारस्य उच्चतरशिक्षाविभागपत्रम् सं० ३०८१६/आर-३/७४/एच शिक्षा, तिथिः १५ नवम्बर १९७४ ईसवी। |
| २. कर्नाटक सर्वकारः | कर्नाटकसर्वकारस्य राज्यपुस्तकालयाध्यक्षपत्रम् सं० टी० ए० २-१ विविध/१०५/७४-७५ तिथिः १२ मार्च १९७५ ईसवी। |
| ३. दिल्ली प्रशासनम् | शिक्षानिदेशालयस्य पाठ्यपुस्तकविभागपत्रम् सं० एफ ५ (६)/पा० पु०/७५ तिथिः २६ मार्च १९७६ ईसवी |

दूरभाष : २७८८६४

# संस्कृत-रत्नाकरः

**जेष्ठ, आषाढ़, श्रावण संवत २०३३**
अप्रैल, मई, जून १९७६

सपादकमण्डलम्
अध्यक्ष :
**डा० सत्यव्रतशात्री**

●

सदस्या :
**कविरत्नम् अमीरचन्द्रशास्त्री**
**डा० कृष्णलालनादानः**
**डा० हर्षनाथमिश्रः**
**श्रीमती कमलारत्नम्**
**डा० लोकेशचन्द्रः**
**श्री ओंकारसिंहराकेशः**
**श्री जयवंशी झा शास्त्री**
**श्री रामशरणमिश्र शास्त्री**

●

प्रधान सम्पादक :
**डा० गोस्वामी गिरिधारीलालः**

●

प्रबन्ध सम्पादक :
**लल्लनप्रसादव्यासः**

●

व्यवस्थापक :
**श्री कान्तिप्रसादमिश्रः**

●

प्रकाशक :
**अखिलभारतीयसंस्कृतसाहित्यसम्मेलनम्**
भूपेन्द्र भवन, कृष्णा मारकेट, पहाड़ गंज
नई दिल्ली ११००५५, दूरभाषम् २७८८६४

●

मुद्रक :
**सैनी प्रिन्टर्स**
पहाड़ी धीरज, देहली-६

●

**मूल्यम्** : २/५० प्रतिप्रतिरूपकम्
वार्षिक १०/रुप्यकाणि
**विदेशे** : एकप्रति एक डालर, वार्षिकम् चार डालर

# विपय-सूची

□ □

पृष्ठम्





# सम्पादकीयम्

अस्माकं राष्ट्रस्य सर्वतोमुखी समुन्नतिः कथं भवितुमर्हतीति विचारप्रक्रियायां सर्वप्रथमं राष्ट्रशिशूनां यूनां बालिकानां युवतीनाञ्च शिक्षणपरिष्करणमावश्यकम्। न जातुचित् कुत्रचित् सुशिक्षणं विना कस्यचिद्देशस्य प्रगतिः संभाव्यते। नात्र कस्यापि विमतम्। का नाम शिक्षा। मानवाभ्युदयसम्पादिका सा। अभ्युदयश्च ऐहिकः पारलौकिकश्च द्विविधो भवति। ऐहिकोऽभ्युदयः तदैव भवितुं शक्नोति यदा न केवलं मानवाः विविधभाषापाण्डित्यम्, अनेककलानैपुण्यं सकलशास्त्रवैचक्षण्यं वा शिक्षाद्वाराऽधिगच्छन्ति अपि च तेषां शरीरं दृढं मनः, वस्स्थं बुद्धिर्निर्मला प्रज्ञा नवनवोन्मेषा प्रतिभा च विकसिता भवन्ति। शिक्षया विशेषतः संस्कृतविद्यया मानवस्य शारीरिकी मानसिकी आध्यात्मिकी चेति सर्वापि समुन्नतिर्भवितुं शक्नोति। अतः अनेकासु संस्कृतपत्रिकासु संस्कृतप्रणियिनां जिज्ञासूनां विदुषां विद्यार्थिनाञ्च कृतेऽवश्यमेव कमपि प्रकाशं प्रदास्यतीमामाशामुररीकृत्य सम्मेलनस्य विविधविषयविभूषितं प्राचीनतमं मुखपत्रं संस्कृतरत्नाकराभिधं संस्कृतविद्याप्रसारणाय प्रयत्नं विदधाति।

प्रायेण या परिपाटी संस्कृतपत्रिकाणामद्यत्वे प्रचप्रचलिता दृश्यते तत्र संस्कृतगद्यस्य यः स्वाभाविकस्समुल्लासः विकासः प्रवाहश्च यच्च मौलिकं वर्णनपाटवं न तत् सम्यक् प्रत्यक्षीक्रियते। यतो हि वहुषु पत्रेषु पदे पदे पद्यबाहुल्येन सूक्तीनां संकीर्तनेन च मौलिकसंस्कृतगद्यस्य परिपाकः न दृश्यते। अपि च नवोत्थितेऽस्मिन् स्वतंन्त्रभारतराष्ट्रे संस्कृतं प्रति सर्वत्रानुरागस्य संस्कृतमहिम्नः तस्य च गरिम्णः शतशः शतशः समुद्घोषाः श्रूयन्ते। अतः संस्कृतलेखनपरिपाट्यां मौलिकशैल्याः साघीयान् स्वाभाविकश्च पन्थाः प्रवर्तनीयः। विद्वांसोऽत्र प्रयतेरन्। अस्माकमनया दृष्टया प्रवर्तितोऽयं 'संस्कृतरत्नाकरः' सफलो वा विफलो वा अत्रापि विद्वास एव प्रमाणम्।

संस्कृतजिज्ञासूनां विद्यार्थिनां कृते ये ये विषयाः चिन्तनात्मकाः साहित्यिकाः वा प्रस्तूयन्ते तेषां समेषामपि समावेशः प्रायेण पत्रेऽस्मिन् क्रियते।

संस्कृतछात्राणां 'संस्कृतरत्नाकरोऽयं' भृशमुपकारीति दृढं प्रतियन्तोवयं स्वकीयां गिरमुपसंहरामः। ★

---

**निवेदनम् :—**

**सर्वे लेखकाः संस्कृतरत्नाकरस्य संस्कृत दिवसे श्रावणपूर्णिमायामागमिन्यां प्रकाश्यमानाय विशेषाङ्काय स्वकोया।**

**रचना :—काव्यं, कथां, नाटकम्, एकाङ्कम्, निबन्धम्, अन्यविधं लेखं वा प्रेषयितुं सादरं निवेद्यन्ते॥**

---

# उदयते स्वतन्त्रताशुभदिनम्

कविः डा० श्रीधर भास्कर वर्णेकरः नागपुर विश्वविद्यालये संस्कृत विभागश्यक्षः

उदयते स्वतन्त्रताशुभदिनम् ॥ध्रु०॥

पारतन्त्र्यमय-चिरतमस्विनी ।
चित्तवित्तबलबुद्धिशोषिणी ।
कालनिशा सा याता विलयम् ।
विकसति नवजीवनम् ।
उदयते..................... ॥ध्रु०॥१॥

विषह्य दुर्धरशस्त्राघातान् ।
समालिङ्ग्य वा कृतान्तपाशान् ।
वीर वरैर्दर्पितं यदर्थम् ।
समरे निजजीवनन् ।
उदयते..................... ॥ध्रु०॥२॥

ग्रामे ग्रामे नगरे नगरे ।
पथि पथि सदने मठे मन्दिरे ।
ध्वजारोपणं भवतु सहर्षम् ।
ध्वनतु विजयगर्जनम् ।
उदयते..................... ॥ध्रु०॥३॥

स्वदेशभाषासमुच्चारणम् ।
स्वधर्मसंस्कृतितत्वास्वरणम् ।
भूयात् स्वदेशभक्तिप्रवणम् ।
आमरणं जीवनम् ॥
उदयते..................... ॥ध्रु०॥४॥

आगे बढ़ता देश हमारा

# असमानता में कमी की ओर

आयकर में छूट की सीमा बढ़ा कर 8,000 रु० कर दी गई है (यह पहले 6,000 रु० थी); इससे 7 लाख आयकर-दाताओं को राहत मिली है। इसके साथ ही ऐसे लोगों पर, जिनकी कमाई ज्यादा थी, आय-कर लगाया गया है; पिछले वर्ष 1.33 लाख व्यक्तियों को आयकर जमा करने का नोटिस दिया गया।

अब निजी बचतों को काफी बढ़ावा दिया जाता है (4,000 रु० तक की बचत पूरी तरह से आय-कर से मुक्त है) और उन लोगों को कड़ी सजा दी जाती है जो करों की चोरी करते हैं।

## दृढ़ संकल्प और कड़ी मेहनत से हम और बढ़ेंगे



**विकास के लिए कर**
पुस्तिका मुफ्त पाने के लिए
कृपया इस पते पर लिखें:
वितरण प्रबंधक,
डी०ए०वी०पी०, 'बी' ब्लाक,
कस्तूरबा गांधी मार्ग,
नई दिल्ली-110001.

davp 73/484

# उपनिषदो गावो दुग्धं गीता

लेखकः— **कृष्णलालः दिल्ली विश्वविद्यालयीयसंस्कृतविभागे प्रवाचकः**



सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः इति यद् बुधैरुच्यते तत् खलु तथ्यएव। यदपि ज्ञानमुपनिषत्सु तत्सर्वं गीतायां दृश्यते। न केवलं दृश्यतेऽपितु सुस्पष्टतया वर्णितम् तत्। उपनिषत्सु यद् दुर्बोधं तदत्र सुज्ञेयं भवति। यद्यपि गीता सांख्यशास्त्रमित्यभिधीयते तदपि उभयोः (गीतायाः उपनिषदाञ्च) ज्ञानपन्थानौ एकमेव लक्ष्यं प्रापयतः। यथा सांख्ये प्रकृतिपुरुषौ अनादी मतौ गीतायाम् अपि—

**"प्रकृतिं पुरुषं चैव विद्धयनादी उभावपि।"**

भूयः सांख्यवद् गीतापि—**"सत्वं रजस्तम इति गुणाः प्रकृतिसंभवाः"** इति कथयति।

परन्तु पुरुषः प्रकृत्याः उच्चतरः। स त्रिगुणातीतः। अतएव स निर्विकारः। स सर्वं जगत् सृजति अव्यक्तरूपेण च सर्वत्र विद्यते। प्रकृतिस्तु तस्य निमित्तमात्रमेव सृष्टिकार्ये।—**"मया ततमिदं सर्वम् जगदव्यक्तमूर्तिना।** ९।४। अत्र गीता सांख्यं त्यक्त्वोपनिषदां सङ्गतं करोति। तथा च श्वेताश्वतरोपनिषदि उच्यते—**"यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः।**

वस्तुतः विश्वस्योत्पत्तिः पुरुषादेव भवति। एतन्मतं गीतायां चोपनिषत्सु चैकमत्येनातिविस्तरेण प्रतिपादितम्। पुरुषः कौतुकाय लीलयैवायत्नतः विश्वं सृजति स्वयं च प्रतिवस्तु निलीय तिष्ठति। सनातनादश्वत्थवृक्षादिव तस्मात् जगच्छाखा उद्भवन्ति। गीतायां लिखितम्—

**ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम्।**

तथा च कठोपनिषदि—**ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः।**

श्वेताश्वतरोपनिषद्यपि अयमेव भावः शब्दान्तरेणोपस्थाप्यते—**वृक्ष इव स्तब्धो दिवि तिष्ठत्यकस्तेनेदं पूर्णंपुरुषेण सर्वम्।**

एष पुरुष आत्मरूपेण सर्वेषां प्राणिनामन्तः, अर्थात् तेषां हृदयपुण्डरीके वसति परन्तु तदापि जीवो न तं जानाति यतः तस्येन्द्रियाणि बहिर्मुखाणि सन्ति। कठोपनिषदि **गुहाहित** इति मुण्डकोपनिषदि च **ब्रह्मपुरे** इति तैत्तिरीयोपनिषदि च **यो वेद निहितं गुहायामिति** आत्मा हृदये स्थितोवर्णितः। गीतायामपि भगवद्रूपेण आत्मा-वदति—

**सर्वस्य चाहं हृदि सन्निविष्टः ।**

हृदयस्थोऽपि सर्वत्र च व्याप्तोऽपि कथं न ज्ञायते आत्मा । सूक्ष्मत्वादिति गीता वेदयति । **बहिरन्तश्च भूताना मचरं चरमेव च । सूक्ष्मत्वादविज्ञेयं दूरस्थं चान्तिके च तत्** ईशोपनिषद्यपि जगदात्मनो व्याप्तत्वमेतैरेव शब्दैर्वर्णितम्ः—

**तदेजति तन्नैजति तद्दूरे तदन्तिके ।**
**तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः ॥**

अनेनैव तथ्येनान्योऽपि सिद्धान्तः समर्थ्यते । प्रतिशरीरे प्रवेष्टुमात्मा अणोः पदार्थादप्यणीयान् महतश्च महीयानस्ति । स एतावन्महान् यदतीव महानाकाशोऽपि तमतिगन्तुमसमर्थः स सर्वेषु महत्तम इत्यर्थः । (कठ० श्वेताश्वतर०—**अणोरणीयान् महतो महीयान्**···) एकादशेऽध्याये गीतायामतीव समक्षरूपेणैतद् विराड्रूपं व्यक्तं भगवतार्जुनस्य पुरस्तात् । **न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव** सर्वं जगत् तस्याङ्गेष्वेव प्रतिभाति । अर्जुनश्च तत्रभगवतो विराड्रूपं वीक्ष्य प्राह—श्वेताश्वतरोपनिषदि अपि आत्मनो सर्वव्यापि विराड्रूपमेवं निरूपितम्ः—

**विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो वहुरुत विश्वतस्पात् ।**

**सं बाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः ॥**

आत्मनोऽणीयस्त्वं गीताया उपर्युद्धृते श्लोके 'सूक्ष्मत्वादविज्ञेयम्' इति शब्दयोर्वर्णितमेव ।

अन्यत्रापि तदेवं वर्ण्यते—**कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः इति ।**

विराड्रूपदर्शनप्रसङ्ग एव वयमात्मन उत्तमेभ्यो देवेभ्योऽपि उत्कृष्टस्वभावं स्मरामः । अर्जुनः सूर्यसहस्रादपि भगवतो भास्वरं रूपं पश्यति । भगवतोऽग्रे देवाअपि सर्वे नमन्ति । सर्वं विश्वमेव तस्मिनेकस्मिन् विराजते । स सर्वानधितिष्ठति । केनोपनिषद्याध्यात्मिकरूपेण इदमेव परमात्मस्वरूपं गुरुः शिक्षयति ब्रह्म सर्वेषामिन्द्रियाणां देवानाञ्च प्रेरकः । तेनैव प्रेरिताः सर्वे एव स्वचेष्टितमनुतिष्ठन्ति । अग्निदेवोऽपि ब्रह्मण एव सामर्थ्येन स्वकर्म करोति तेन विना तृणमपि दग्धुं नासौ प्रभवति । यथा किमपि महत् कार्यं तथैव नेत्रनिमेषादिवत् लघु कार्यमपि तस्यैव शक्त्या क्रियते । सूर्यचन्द्रादयस्तस्यैव तेजसा दीव्यन्ति । तथाहि कठोपनिषद्मुण्डकोपनिषच्चोद्घोषयतः—

**तमेव भान्तमनुभाति सर्वम्**—अयमेव च भावो गीतायां मेवं प्राप्यते—

**तस्य भासा सर्वमिदं विभाति ॥**
**रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।**

न केवलमात्मा भास्वरान् सूर्यादीन् अतिक्रामति परन्तु तमसोऽपि परः स उच्यते । तमसः परः इत्यस्ति तैत्तिरीयोपनिषद्वचः । गीतायां पुनरयमेव भावः एवमभिव्यज्यते—

**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।**

एतद्ब्रह्म नित्यं चाजरं चाव्ययं चैव सर्वग्रन्थेषु मन्यते एतादृशमपि तत् संसारस्य मूलं तस्य विनाशकिमपि कथ्यते—

**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च (गीतायाम्)** मूलं चास्य भावस्योपनिषदेव । योनिः सर्वस्व प्रभवाप्ययौ हि भूतानाम् (माण्डूक्य०) मुण्डकोपविषदि अपि ब्रह्मणः प्रभुत्वशक्तिश्च संहारशक्तिश्च सुस्पष्टं प्रदर्शिते । यथोर्णनाभिस्तुन्तुजालं सृजति गृह्णाति च तथैव ब्रह्म विश्वं सृजति संहरति च ।

मनसः सर्वेषामिन्द्रियाणां च संयमः संसारे सुखस्य साधनम् । एतेनैव मनुष्यस्य कर्म तस्य पुनर्जन्मनः कारणं न भवति । कर्म न कर्त्तव्यमिति नाभिप्रायः यतः अकर्मकृत् मनुष्यः क्षणमपि न तिष्ठति । अतएव चोक्तं निष्काम-कर्म कर्तव्यमिति । भोगांस्त्यक्त्वा संन्यासी भूत्वा मोक्षं प्राप्तुं न समर्थः कश्चित् । परन्तु सर्वं त्यागेन भोक्तव्यम् अर्थात् भोगेषु रागो न कर्तव्यः । ईशोपनिषदि उपदिष्टम्—

**तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम् ।**
**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ॥**

गीतायां सर्वत्र निष्कामकर्म सुबोधैः शब्दैर्विस्तार-पूर्वकं वर्णितम् । भगवानर्जुनमुपदिशति—

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।

मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि '। कथं मनुष्येण कर्मपरेण भाव्यमित्यस्य उपनिषदनुशिष्टस्य भावस्य तर्कपूर्ण आधारो गीतायामेवं स्पष्टीक्रियते—**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्** इति ।

अतः संयमी एव परमां गतिं प्राप्नोति । संयमस्तु वेदोक्तकर्मकाण्डमात्रेण, न शक्योऽधिगन्तुम् । कुतो ब्रह्म-लाभः संयमेन विना । अतएवोक्तं यद् न यागानुष्ठानेन परम् आत्मनैव आत्मा लभ्यते । त्रैगुण्यविषयाः वेदा निस्त्रै-गुण्यो भवार्जुन इत्येतद् गीतानुशासनं मूलरूपेण मुण्डकोप-निषदि प्रतिपादितम्—**प्लवा ह्येते अदृढा यज्ञरूपा अष्टा-दशोक्तमवरं येषु कर्म ॥**

अपि च ब्रह्मज्ञानाय श्रद्धा परमावश्यकी । तथाहि गीतायां ज्ञानमित्युच्यते । केनोपनिषद्—अप्युपदिशति—**प्रतिबोधविदितं हि यस्य स जानातीति** तथैव कठोपनिषदि ज्ञानोत्सुके नचिकेतसि प्रथममेव श्रद्धाऽऽविवेश तत्रैवान्य-स्मिन् मन्त्रे प्रतिपाद्यते—

**(अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते)**

ब्रह्मलाभाय श्रद्धया समं तपस्यापि वाञ्छिता । ब्रह्म-चर्येण तपसा च मनो न विभ्राम्यति तदैव चात्मविद्यायै समर्थो भवति । आत्मविद्या ब्रह्मलाभं प्रापयति योगिनम् ।

उक्तं हि श्वेताश्वतरोपनिषदि— **आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत् परम् ।**

तथैव तैतिरीयोपनिषदि— **तपसा ब्रह्म, विजिज्ञासस्व ।** इति उपदिश्यते ।

प्रश्नोपनिषदि च **सत्येन लभ्यस्तपसा ह्येष आत्मा ।** इत्यनुशिष्टम् ।

एतदुपनिषद्वचनं गीतायां शब्दान्तरैरेवं प्रतिपाद्यते

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।**

**ददामि बुद्धियोगं तं येन नामुपयान्ति ते ॥**

ओङ्कारस्य ध्यानविषये सर्वासाम्मुपनिषदां गीतायाश्च प्रगाढ़मैकमत्यं विद्यते । ओङ्कारस्मरणमेव ब्रह्मलाभस्य सुगमः पन्थाः । मुण्डकोपनिषद् धनुः कृत्वा प्रणवमात्मनि वेद्धव्यमिति निर्दिशति । प्रणव एव सर्वेषां सारः ।

तथा कठोपनिषदि **तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् ।**

प्रश्नोपनिषदि च—**तमोङ्कारेणैवायतनेनान्वेति विद्वान्य-स्तच्छान्तमजरममृतगभयं परं चेति ।**

तैत्तिरीयोपनिषदि पुनः—**ओमिति ब्रह्म** इत्येवमुद्-घोष्यते ।

तथाहि गीतायां— **यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो गीतरागाः**

**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ।**

**ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।**
**यः प्रयाति त्यजन् देहं स याति परमां गतिम् ।**

अत्र ओङ्कारः साध्य एव जातः । तदेव ज्ञानं च ज्ञेयं च, मार्गश्च लक्ष्यं च । माण्डूकोपनिषदि तु ओमेवाखिल

विश्वमिति उल्लिखितम् । ओम् ब्रह्मपदमाप्नोति । भूतं भवत्, भविष्यदिति सर्वमोङ्कार एव । त्रिकालातीतं ब्रह्मापि ओङ्कार एव । एवमेव गीतायामपि "**प्रणवः सर्ववेदेषु** इति ब्रह्म एव कृष्णरूपेण भाषते । केनोपनिषदि ओङ्कारवर्णाः विपर्यस्ता उमा (उ+म्+अ+(टाप्) =अ+उ+म्) रूपेण देवानामग्रे गत्वा तेभ्यो ब्रह्माणं वेदयति । अतएव ओङ्कारो गीताया उपनिषदाञ्च सर्वांसां केन्द्रमिवालक्ष्यते ।

यथा उपनिषद आहुः ब्रह्मविदात्मानं सर्वभूतेषु सर्वभूतानि चात्मनि पश्यतीति तथैव गीतायामप्युक्तमेतत् । यद् ब्रह्मविद्या इहास्मिन्नेव जन्मनि प्राप्तव्या; अन्यथा पुनर्जन्म मरणबन्धने पतति मनुष्यः इति वचः तद् गीतापि उपनिषदश्चापि मन्यन्ते । केनोपनिषद्युच्यते इदं **चेदवेदीदथ सत्यमस्ति—**

तथा गीतायामुक्तम्—**शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।**

**कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ।**

अन्ते एतत् सर्वं दर्शनमेकस्मिन्नकारे निमज्जति । **अक्षराणामकारोऽस्मि** इति ।

ऐतरेयोपनिषदि प्रतिपादितम् **अकारो वै प्रथमा वाक्** इति ।

माण्डूक्योपनिषदि च—**जागरितस्थानो वैश्वानरोऽकार प्रथमा मात्राप्तेरादित्वादाप्नोति ह वै सर्वान् कामान् आदिश्च भवति य एवं वेद ।**

तथा च गीतायां भगवतोक्तम् ।

इत्थं प्रत्येकं वाक्ये गीतया तुल्यतामुपयान्ति सर्वा उपनिषदः । महद्धि गोरूपाणां तासामुपकारित्वं याभिः गीतारूपममृतफलदायि दुग्धमुपायनीकृतं जिज्ञासुभ्यः ।

★

# इन्दिरा-कीर्ति-शतकम्

**श्रीकृष्ण सेमवाल एम० ए० शिक्षाशास्त्री**
व्याकरणाचार्यः साहित्यरत्नम्
रा० उ० मा० विद्यालयम्: रूपनगर दिल्ली

परम-पावनं शक्ति-पूजकं, कविवरोत्तमं ज्ञान-सागरम् ।
मम मतेस्तमस्तोमनाशकं, गुरुवरं शुभं नौमि भास्करम् ॥ १ ॥

द्रुहिण-सेवितां वेदवर्णितां सुजन-पूजितां भाष्यभाषिताम् ।
कविजनार्चितां शास्त्र-शासिकां, विबुध-भारतीं नौमि सादरम् ॥ २ ॥

सकलसंस्कृतेरग्रगामिनं, निखिलदेहिनां मार्ग-दर्शकम् ।
शबलतामयञ्चाद्भुतात्मकं, तमिह नीवृतं नौमि भारतम् ॥ ३ ॥

विपिन-वाटिका-पुष्य-भूषिते गिरि-गुहा-गुरुग्राम-गर्विते ।
सरस-सागरागार-राजिते, मधुरिमाञ्चिते भव्यभारते ॥ ४ ॥

ऋषिभिरर्चिते विद्वदञ्चिते, कविभिरादृते नेतृ-भूषिते ।
गुणिगणान्विते शान्ति-शोभिते, जनवरार्थिते सुप्रयागके ॥ ५ ॥

गगनचुम्बनोत्कण्ठिते शुभे, सुललिते वरे चूर्ण-लेपिते ।
जनवराश्रिते भव्यतायुते, भुवनभासितानन्दसद्मनि ॥ ६ ॥

सुकृतसंचयैश्चैव नेहरोः विमलसद्मनि ज्योतिरुत्तमम् ।
अजनि या प्रिया साति विश्रुता, 'प्रिय (सु) दर्शिनी' लोक इन्दिरा ॥७॥

जगति मातृ-भू-कार्यसाधिका, सतत-हर्षिणी द्रव्य-वर्षिणी ।
जलधि-गर्भतो या रमा-समा, समजनीन्दिरा मातृ-कुक्षितः ॥ ८ ॥

विविधदेवता तत्वसंयुता, भगवती-शिवा-शक्ति-सन्निभा ।
अयि महोज्ज्वले, वाल्य-जीवनात् भुवि शुभा प्रभाते प्रकाशते ॥ ९ ॥

# राष्ट्र में एक बार फिर आत्मविश्वास जागा है

## 1975-76

# गांवों में नया जीवन

★ मकान बनाने के लिए पैंसठ लाख से अधिक प्लाट दिये जा चुके हैं, इनमें से 3,68,000 प्लाट विकसित हैं। 2,46,000 मकानों का निर्माण-कार्य पूरा हो चुका है।

★ लगभग 47,000 बंधक मजदूर बन्धन से मुक्त किए गए।

★ भूमि की उच्चतम सीमा सम्बन्धी कानून लागू करने से 16,67,000 एकड़ भूमि प्राप्त हुई। इसमें से अब तक लगभग 1,80,000 व्यक्तियों को 4,24,000 एकड़ भूमि बाँटी जा चुकी है।

★ उन्नीस ग्रामीण बैंक स्थापित किए गए हैं, 1976-77 में 50 और स्थापित किए जाएंगे। सहकारी ऋण समितियों को और मजबूत बनाया जा रहा है।

डीएवीपी 76/४8

जनहिते रतात् भारत-प्रियात् बुधवरार्चिताञ्छ्रीजवाहरात् ।
बहुविधाः क्रियाः देशरक्षिकाः, अधिगतास्त्वया बाल्यजीवने ॥ १० ॥

स्वपितुराशिषा ज्ञान-संयुतां निखिलधीमतां हर्षवर्द्धिनीम् ।
जनहितार्थिनीमिन्दिरामयं नमति सादरं लोकमातरम् ॥ ११ ॥

बहुविदेशिनां शासने स्थितं विमल-भारतं दुःख-पीडितम् ।
नयनगोचरीकृत्य सत्वरं स्वयमपीन्दिरा दुःखिताऽभवत् ॥ १२ ॥

सितवपुष्मतां नाशहेतवे रिपुरहस्यभिन्नाम वानरी ।
शिशुजनैर्युता चातुरी चमूः वयसि नूतने निर्मिता त्वया ॥ १३ ॥

प्रथित-धीमतां पार्श्ववर्तिनां शुभ-सुयोगतो बाल्य-जीवने ।
हितकरीं महाशक्तिमैश्वरीमुपगतैव या तां नमाम्यहम् ॥ १४ ॥

परमपण्डिताच्छास्त्रपारगादधिगतो यथा ज्ञान-सञ्चयः ।
निपुणता त्वया प्रापि नीतिषु प्रखरतामतो नैव सत्वरम् ॥ १५ ॥

निजमतेरियं वर्धनच्छलात् गतवती भुवो ज्ञानसद्मसु ।
अतितरामभूत् धीमतीन्दिरा जनहितैषिणी लोक-मण्डले ॥ १६ ॥

निजधरामिमां वीक्ष्य दुःखितां सुखरसैः सदा पूरितं प्रियम् ।
कुसुमितं नवं यौवनं त्वया झटिति पातितं क्रान्ति-वाडवे ॥ १७ ॥

सितशरीरिणां द्रोहकारणात् मुहुरयादियं कृष्ण-मन्दिरे ।
विचलिता न हि क्रान्तिभास्वती स्थिररसा धृतिं भाति तेऽति सा ॥ १८ ॥

सुरगृहादपि श्रेष्ठतामयी भवति सर्वदा जन्मदायिनी ।
अयि ! ततश्च ते मातृ-मृत्युना किमभवन्न वै दुःखदारुणम् ॥ १९ ॥

सरलशैशवं चञ्चलं प्रियं सुखमये यदङ्केऽतिपावने ।
परमनायि वै तन्मृतिश्च ते परमकष्टदा नात्र संशयः ॥ २० ॥

द्विजकुलं निजं जन्मना यया विबुधसेवितं पावितं प्रियम् ।
तदपि भूतले नूतना दिशा परिणयेन वै दर्शिता त्वया ॥ २१ ॥

द्युमणिचन्द्रयोस्तुल्यतां गतौ गुणविशेषयोः सर्वमान्ययोः ।
ललितपुत्रयोः जन्मदायिनीं नमति सादरमिन्दिरां जगत् ॥ २२ ॥

हृदयवासिनः पूज्यस्वामिनो निधन-वेदना चातिकष्टदा ।
असमयेऽप्यभूत् वज्रदारुणा धृति-गुणेन तां सोढवत्यसौ ॥ २३ ॥

नयविदः पितुः प्रेमतो यया निखिलनीतयः शिक्षिताः पुराः ।
भ्रमणकारिणीं विश्वमण्डले नयविदुत्तमां तां नमान्यहम् ॥ २४ ॥

तव गुणोत्तमां वीक्ष्य योग्यतां दलसुदिग्गजैः देशनेतृभिः ।
अयि ! नियोजिता त्वं तदैव हि जन-समादृतेऽध्यक्षसत्पदे ॥ २५ ॥

जनकनेहरोः मृत्युदुःखजं कठितामयं कष्टमप्रियम् ।
न गणितं त्वया धैर्यशालिनि ! धृतिमयं मनो धन्यमस्ति ते ॥ २६ ॥

भरत-भू-शुभे शासने स्थिताः बुधवराः यदा शास्त्रिणस्तदा ।
मतिमतीन्दिरा मन्त्रितां गता महति विश्रुते सूचनालये ॥ २७ ॥

अहित-बुद्धिभिः पाकशासकैः सह रणक्षणे भीतिकारणे ।
विमलया धिया सूचनालयः सफलतां गतश्चालितस्त्वया ॥ २८ ॥

तव करेऽर्पितः सूचनालयः हितकरस्तदा जातवान्महान् ।
अतिमनोज्ञया धन्यया धिया प्रकटितं यशस्ते महोज्ज्वलम् ॥ २९ ॥

उपगतो यदा ताशकन्दके सुमनसा सदा शान्तिसेवकः ।
परहिते रतः श्रीबहादुरः उपरतस्तदा हा जनप्रियः ॥ ३० ॥

विकलता तथाऽनाथभावना विषमतापि चात्यन्तहेयता ।
विवशता तदा म्लानतापि वा जनमनस्सु हा भारतेऽभवत् ॥ ३१ ॥

उपरते बुधे श्रीबहादुरे निखिलनायकाः सङ्गतास्तदा ।
निपुणतां नये वीक्ष्य तेऽतुलां प्रमुखमन्त्रिणस्ते पदं ददुः ॥ ३२ ॥

प्रमुखमन्त्रिणस्त्वां पदे प्रिये नयनगोचरीकृत्य नायकाः ।
मुदमितास्तदा देशवासिनः सकलभारते त्वज्जयोऽभवत् ॥ ३३ ॥

तिलकगोखलेगान्धिनां यथा सुमतमुत्तमं पूरितं सदा।
जगति मातृ-भूकार्यसाधिका विजयतामियं सेन्दिरा वरा॥ ३४॥

विबुधमन्दिरं विद्वदाश्रयं विमलभारतश्चातिशोभनम्।
सुखमयं दृढं धान्यसंयुतं कृतमहो त्वयास्वार्यकर्मभिः॥ ३५॥

निजहिते रतान् स्वार्थतत्परान् कुटिलनायकान् वीक्ष्य सत्वरम्।
निजदलात् पृथक्कृत्य तान् त्वया सुखदशासनं भारते कृतम्॥ ३६॥

विधिविधानतः राष्ट्रभूपतेः चयनकर्मणि द्रोहकारिणाम्।
अयि! कृतं त्वया हृत्सु पीडनं विजयतां गते श्रीगिरेरिव॥ ३७॥

प्रमुखनायकान् देशसेविनः प्रतिनियोजिताः देशरक्षणे।
निजधिया त्वया भारतं तदा रिपुसमूहतो रक्षितं खलु॥ ३८॥

तव विरोधिनश्चातितापिनः वितथभाषिणः छद्मकारिणः।
प्रतिगताः गुहाभ्यन्तरे जनाः तिमिरवत् समे भास्करोदये॥ ३९॥

सकलकर्मसु प्रायशः स्थिरः धृतिमते! त्वया बुद्धिवैभवैः।
हितकरो जयः प्राप्त इन्दिरे! प्रकटयत्ययं ते सुरक्षताम्॥ ४०॥

अतुलकर्मभिः सौम्यतादिभिः सुदृढनिश्चयैः कूटनीतिभिः।
विफलिताः कृताः शत्रवोययया विजयतां सदा धीमतीन्दिरा॥ ४१॥

सबलशासकैः भ्रष्टतायुतैः धनिजनैः कृतं रक्तशोषणम्।
जनगणस्य वै वीक्ष्य दीनतां धनगृहाः कृताः राष्ट्रसम्पदः॥ ४२॥

अहितकारकं साम्यबाधकं बहुतरं तथा भारवर्द्धकम्।
नृपतिसौविधं लोकहेतवे निजधिया त्वया तत् व्यपाकृतम्॥ ४३॥

अभिमतं प्रति द्वेषकारिणः सदसि ताञ्च विश्वासघातिनः।
नयनगोचरीकृत्य सत्वरं पुनरकारि निर्वाचनं त्वया॥ ४४॥

# राष्ट्र में एक बार फिर आत्मविश्वास जागा है

## 1975-76

# बिजली उत्पादन में प्रगति

★ अब तक का रिकार्ड उत्पादन 7976.4 करोड़ यूनिट हुआ। दैनिक रिकार्ड उत्पादन 25 करोड़ यूनिट है।

★ 25 नये विजलीघरों ने 1800 मेघावाट विजली पैदा की, इनमें से 20 ने सितम्वर 1975 और मार्च 1976 के बीच उत्पादन शुरू किया।

★ आशा है कि इस वर्ष 20,50,000 हेक्टेयर अतिरिक्त भूमि की सिंचाई सुविधाएँ प्रदान की जाएँगी।

★ 6,356 गांवों में विज़ली पहुंचाई गई। अब तक 1,74,079 गांवों में विजली पहुंच चुकी है। 1,40,000 पम्प सेटों को विजली दी गई।

डीएवीपी 76/89

सकलभारते देशवासिभिः जनहिते रतं बुद्धिसंयुतम् ।
निपुणतामयञ्चातिनिर्मलं बहुसमर्थितं ते दलं तदा ॥ ४५ ॥

प्रमुखमन्त्रिणो गौरवास्पदे निखिलनायकैः त्वं नियोजिता ।
मुदमितास्तदा देशवासिनः जनवराः समे सौख्यवाञ्छकाः ॥ ४६ ॥

अवनतेः महत् कारणं परं धनविहीनतां वीक्ष्य भारते ।
प्रतिदिनञ्च तां हर्तुं मिन्दिरे ! स्थिरधिया त्वया योजना कृता ॥ ४७ ॥

दलितदीनवर्गाल्पसंख्यकान् हरिजनान्प्रति सौम्यतामयी ।
विमलभावना वर्तते सदा मनसि वाचि ते; कर्मसु प्रिया ॥ ४८ ॥

विमलभारतं भारतं भुवि सततमीक्षितुं पार्श्ववर्तिभिः ।
सबलशासकैः साकमुत्तमा बहुविधा, कृतास्सन्धयस्त्वया ॥ ४९ ॥

प्रगतिमिन्दिरे ! भारतस्य ते द्रुततरामिमां वीक्ष्य मञ्जुलाम् ।
मुगलशासकः पाकनायकः रिपुरभूदसौ कारणं विना ॥ ५० ॥

**लेखकान् प्रति निवेद्यते संस्कृतरत्नाकरे' प्रकाशनार्थं समये कवितानाटकनिबन्धादिरूपां स्वरचनां प्रेष्यानुगृह्यताम् भवदीयोऽयं संस्कृतरत्नाकर इति ।**

# भाष्यकारः उवटाचार्यः

**निबन्धकर्त्री—मधुवाला,**
शोधच्छात्रा—दिल्ली-विश्वविद्यालयः



उवटस्य नाम्नः उव्वट-औवट-ऊवट-ऊअट-उअटश्च अनेके पाठाः प्रचलिताः। परं तत्र 'उवट' इति सर्वाधिक-प्रचलितः पाठः। आप्टेमोनियरविलियम्सादि महाभागानां कोषेषु उवटशब्दस्य नास्ति कोप्यर्थः। तं व्यक्तिविशेषरूपेण गृहीत्वा तदनुसारमेव उवटस्याग्रे 'A Commentator' (भाष्यकारः) इति मात्रं निर्दिष्टम्। संभवतः उवटशब्दः विशुद्धरूपेण संस्कृतस्य नैवास्ति। प्राकृतकोशे उव्वट्ट उभ (उद्+वृत्वर्त्त्य) शब्दः प्राप्यते। संभवतया अयमेव शब्दः भाष्यकारस्य नामरूपेण प्रयुक्तः।

**उवटस्य निवासस्थानम्**—उवटस्य जन्मकालादीनां परिचयस्रोतः तस्य भाष्यं स्वयमेवास्ति। यद्यपि उवटः स्वजीवनविषये न किमप्यलिखत्, नैव केनापि परवर्ति-विदुषा तमुद्दिश्य किमपि लिखितम्, परं तथापि तस्य भाष्येषु यत्र-तत्र तस्य स्थितिकालादिद्योतकाः संकेताः सन्ति। उवटस्य जन्मस्थान विषये तु मतिवैषम्यम् विद्यते। केचिद्विद्वांसः तं कश्मीरब्राह्मणं स्वीकुर्वन्ति। यतः प्रायः पुरातनकाश्मीरजानां विदुषां नामसु टकारान्तनामकरण-शैली दृश्यते, यथा—वज्रटमम्मटकैयटादयः। परं उवटः वाजसनेयिसंहितायाम्२ आत्मानं 'आनन्दपुरवास्तव्यम्' घोषयति। अधुना प्रश्नोऽयं यत् कुत्रास्ति आनन्दपुरम्? श्रीरामसिंहपथिकमहोदयेन 'शुक्लयजुर्वेद पर महीधर, उवट और स्वामी दयानन्द का समीक्षात्मक एवं तुल-नात्मक अध्ययन, नामकस्वकीये शोध-प्रबन्धे उवटस्य जन्मस्थानं — काश्मीरराज्यान्तर्गतानन्दपुरनामग्रामः स्वीकृतः।३

२. प्राकृत टैक्स्ट सीरीज, पाइय सद्द मइण्णवो, पृ० १८३।

२. वा० सं०, २० वाँ अध्याय।

३. आगराविश्वविद्यालयेन पी० एच० डी० उपा-ध्यर्थ स्वीकृतः शोधप्रबन्धः, अप्रकाशितः, पृ० ५८६.

परं स्वमतपुष्ट्यर्थं स किमपि तर्कं न प्रस्तौति।

भौगोलिकप्रमाणैर्ज्ञायते यत् आनन्दपुरनामकस्थानं उड़ीसाप्रदेशे वर्तते।[1] पं भगवद्दत्तमहोदयेन आनन्दनगरं गुजरातप्रदेशे स्वीकृतम्। पं० भगवद्दत्तमहोदयः उवटं नागरब्राह्मणं मन्यते।[2] आर० जी० भण्डारकरमहाभागा-नुसारमपि आनन्दनगरं गुजरातप्रदेशे एव वर्तते। स तु

१. दी कोलम्बिया लिपिनकॉट गजेटियर ऑफ दी वर्ल्ड, पृ० ६६.

२. वैदिक वाङ्मय का इतिहास, पं० भगवद्दत्त, पृ० ८७.

तत् आनन्दनगरम् एव आधुनिकवड्नगरम् इति प्रतिपादयति ।[3]

श्री नन्दू लाल डे महोदयेनोक्तं यत् उत्तरभारते स्थितमेतत् वड्नगरम् । तत्रत्यः एकः प्रदेशः अधुनाऽपि आनन्दपुरनाम्ना ज्ञायते । प्रदेशोऽयं उत्तरतः प्रतीचीं प्रति वलभ्या पञ्चविंशति क्रोशान्तरितः स्थितः ।[4] प्रथमं प्रदेशोऽयं अनन्तपुरनाम्ना प्रसिद्धमासीत् ।[5] आनन्दपुरं वड्नगरं वा नागरमपि कथ्यते यत् गुजरातप्रदेशस्यनागरब्राह्मणानां मूलभूतं स्थानम् । इदमपि संभवति यत् आनन्दम्, आनन्दनगरम्, आनन्दपुरं वा एकस्यैव स्थानस्य नामान्तराणि । अस्मिन्नेव आनन्दनगरे उवटः न्यवसत् । परं अन्यस्मिन् श्लोके उवटेन लिखितम्—

ऋष्यादींश्च नमस्कृत्य अवन्त्यामुवटो वसन् ।
मन्त्राणां कृतवान् भाष्यं महीं भोजे प्रशासति ।।[6]

श्लोकेनानेन स्पष्टमेव यत् अवन्त्यां निवसन् स मन्त्रभाष्यं कृतवान् ।

अतः कथयितुं शक्यते यत् मूलतः उवटः काश्मीरजः ब्राह्मण आसीत्, परं तस्य जनकेन आनन्दपुरमागत्य निवासः कृतः ।

---

३. दी सर्च ऑफ संस्कृत मैन्यूस्क्रप्टस इन दी बॉम्बे प्रेजीडेन्सी १८८२-८३

४. भौगोलिक कोष

५. आलिनाशिलालेख, ई० ९४९ से ई० ९५१.

६. वा० सं०, भूमिका

---

**उवटस्याविर्भावकालः**—'महीं भोजे प्रशासति' इति उपर्युक्तेन श्लोकांशेन स्पष्टमेव यत् उवटः भोजशासनकाले स्वभाष्यं कृतवान् । अधुना प्रश्नोऽयं यत् कस्य भोजस्य शासनकाले स भाष्यं कृतवान् यतः ऐतिहासिकग्रन्थेषु एकाधिकभोजनृपाणां वर्णनं प्राप्यते । मुख्यतः तु भोजद्वयं वर्णितम्—भोजप्रतिहारस्य वर्णनं तु वराहताम्रपत्रे प्राप्यते यत् १८३६ तमे ख्रिस्तीयवर्षे अलभ्यत । अपरश्चास्ति परमारवंशीयः भोजः । तस्यशाशनकालस्य तिथीनां संकेतः शिलालेखैः प्राप्यते—

मोदासा ताम्रपत्रः—वि० सं० १०६७. १
महूदी ताम्रपत्रः—वि० सं० १०७४. २
बांसवाडा ताम्रपत्रः—वि० सं० १०७६. ३
बैट्मा ताम्रपत्र—वि० सं० १०७६. ४
उज्जैन ताम्रपत्र—वि० सं० १०७८. ५
देपालपुरशिलालेखः—वि० सं० १०७९. ६
ब्रिटिशम्यूजियम्—वि० सं० १०९१. ७
राजमृगाङ्ककरण—शक० ९६४. ८
तिलकवाड़ाशिलालेख—वि० सं० ११०३. ९
दासबलियाचिन्तामणिसारनिका शक० ९७७. १०

---

1. EI, XXXIII, PP. 192-98
2. तदेव, पृ० २१५—१८
3. EI, XI, PP. 181-83, IA, XLI
4. EI, XVIII, PP. 320-25. PP. 201-02.
5. IA. VIPP. 53-54.
6. IHQ, VIII, PP. 305-15.
7. रूपम् १९२४, पृ० ३.
8. KHD4, I, P 279.
9. PTAIOC, 1919 (Poona Session) PP. 319-26
10. JOR (Madras) XIX, Pt. II. Supplement P. I.

---

विवरणमेतत् सुधासागरकारेण भीमसेनेन मम्मटाचार्यस्य विषये स्वग्रन्थे काव्यप्रकाशस्य सुधासागरनामक टीकायां प्रकटीकृतम्, परं उवटेन वाजसनेयिसंहिताभाष्ये स्वपरिचयः एवं प्रदत्तः—

आनन्दपुरवास्तव्य वज्रटाख्यस्य सूनुना ।

उवटेन कृतं भाष्यं पदवाक्यैः सुनिश्चितैः ।।

उवटप्रदत्तेन विवरणेनानेन उवटस्य पितुर्नाम 'वज्रट' वर्तते नैव जय्यटः । स वेदभाष्यं भोजस्य शासनकाले एव अलिखत् ।[1]

श्री हनुमत्प्रसादशास्त्री काश्मीरेतिहासनामकस्वकीये ग्रन्थे लिखति यत्-यद्यपि काश्मीरदेशीयस्य जैयटसगोत्रस्य वज्रटाख्यस्य दत्तकपुत्रोऽयमिति कल्पनायां जैयटपुत्रस्यापि उव्वटस्य वज्रटपुत्रत्वमुपपद्यते, तथापि तस्य भोजसमकालिकत्वमनुपपन्नमेव ।[2]

आचार्य विश्वेश्वरोऽपि कथयति यत् नास्ति मम्मटः भोजसमकालीनः, परम् उवटः तु आत्मानं भोजसमकालिकं मन्यते । भोजमनु अभवत् खलु मम्मटः यतः स स्वयमेव काव्यप्रकाशस्य दशमे उल्लासे उदात्तालंकारोदाहरणान्ते निजगाद—'भोजनृपतेस्तत् त्यागलीलायितम्' मम्मटः भोजस्योत्तरवर्ती इति ।[3]

अतः भीमसेनस्य कथनं न समीचीनं प्रतिभाति ।

१. काव्यप्रकाश, आचार्यविश्वेश्वर, पृ० ६३

२. काश्मीरेतिहासः, आचार्य हनुमत्प्रसाद शास्त्री पृ० २१४

३. काव्यप्रकाश, आचार्य विश्वेश्वर, पृ० ६३.

कृतः, उवटेन च अवन्त्याम् । तत्रैव निवसन् स मन्त्राणां भाष्यं कृतवान् ।

**उवटस्य कौटुम्बिक वृत्तान्तः**—उवटस्य पितुर्नाम 'वज्रट' इत्यासीत् । स्वयम् उवटः स्वभाष्याणां पुष्पिकायामिलिखत्—

आनन्द पुरवास्तव्यवज्रटाख्यस्य सूनुना ।

उवटेन कृतं भाष्यं पदवाक्यैः सुनिश्चितैः ।।

श्लोकेनानेन ज्ञायते यत् उवटस्य पितुर्नाम जैय्यट इत्यासीत् । एवं तस्य पितुर्नामद्वयं भवति । परं उपर्युक्त जैय्यट नाम विषये नास्ति अन्यद् किंचित् प्रमाणम् । एतद्विपरीतं वज्रटस्य उल्लेख उवटभाष्याणामनेकासु पाण्डुलिपिषु अपि प्राप्यते । उपर्युक्त श्लोक 'आनन्दपुर वास्तव्य…महीं भोजे प्रशासति' स्वल्पपाठान्तरैः अनेकासां पाण्डुलिपीनामध्यायान्तेष्वपि प्राप्यते ।[1] बड़ोदायाः हस्तलेखस्य १०४४७ संख्यान्ते यत्--

आनन्दपुरवास्तव्यवज्रटाख्यस्य सूनुना ।

मन्त्रभाष्यमिदं क्लृप्तं भोजे पृथ्वीं प्रशासति ।।[2]

पूनायाः हस्तलेखस्य २३२ संख्यायाः दशमाध्यायस्यान्ते लिखितं—

ऋष्यादींश्च नमस्कृत्य ह्यवन्त्यामुवटो वसन् ।

मन्त्रभाष्यमिदं चक्रे भोजे राज्यं प्रशासति ।।[3]

१. वैदिक वाङ्मय का इतिहास, पं० भगवद्दत्त, पृ० ८७

२. वही ।

३. वही ।

काशीमुद्रितवाराणसीस्थराजकीयसंस्कृतपाठशालीय-उवटभाष्यानुसारिणः पाठस्य त्रयोदशाध्यायस्यान्ते लिखितं यत्—

आनन्दपुरवास्तव्यवज्रटस्य च सूनुना ।

उवटेन कृतं भाष्यमुज्जयिन्यां स्थितेन तु ।।[1]

एतैः सर्वैरपि उद्धरणैः 'वज्रट' इति नाम्नः पुष्टिर्भवति ।

आनन्दाश्रमात् ईशावास्योपनिषदि अनेकाः टीकाः मुद्रिताः । तासु उवटभाष्यमपि मुद्रितम् । तस्यान्तिमेन लेखेन ज्ञायते यत् उवटस्य पिता वज्रटः कश्चिद् उपाध्याय आसीत्—

१. वैदिक वाङ्मय का इतिहास पं० भगवद्दत्त, पृ० ८७

Regd. No. D-(C)—494

इति श्रीमद्वज्रट भट्टोपाध्यायात्मजसकलनिगमविच्चूडामणि श्रीमदुवटभट्टार्यविरचिते······

चत्वारिंशत्तमोऽध्याय: ।[2]

उवटस्य जनकातिरिक्तस्य कस्यापि सम्बन्धिन: विषये किमपि प्रमाणं इदानीं यावत् नोपलब्धम् । परं काव्यप्रकाशस्य 'सुधासागर' टीकाया: निर्माता भीमसेन: पतञ्जलिप्रणीतमहाभाष्यस्य टीकाकारं कैयटमहाभागम्, यजुर्वेदभाष्यकारम् उवटमहाभागं च मम्मटस्य अनुजौ स्वीकरोति—

श्रीमज्जैयटगेहिनीसुजठराज्जन्माप्य युग्मानुज: ।
श्रीमन्मम्मटसंज्ञयाश्रिततनुं सारस्वतीं सूचयन् ।।
श्रीमान् कैयट औव्वटो ह्यवरजौ यच्छात्रतामागतौ ।
भाष्याब्धि निगमं यथाक्रममनुव्याख्याय सिद्धिं गतौ ।।[3]

२. वही ।

३. काव्यप्रकाश, स्व० आचार्य विश्वेश्वर, पृ० ६३

भोजनृपते: शासनकालस्य उपर्युक्ता: काश्चित् तिथय: सन्ति या: शिलालेखै: ज्ञायन्ते । आसु तिथिषु भोजशासनकालस्य प्रारम्भिकी तिथि: १०११ तमख्रिस्तीयं वर्षमस्ति, अन्तिमा च १०५५ तमख्रिस्तीयवर्षम् । एवं भोजस्यशासनकाल: १०११ तमख्रिस्तीयवर्षादारम्य १०५५ तमख्रिस्तीयवर्षपर्यन्तं कथयितुं शक्यते ।

उवटोऽस्ति भोजसमकालिक:, अत: तस्यापि काल: १०११ तमख्रिस्तीयवर्षाद् १०५५ तमख्रिस्तीयवर्षपर्यन्त एव वर्तते ।

अस्त्युवट: भोजसमकालिक: परं किं स भोजाश्रितोऽप्यासीत् न वा । पं० जगदीशलालशास्त्रि संपादितवाजसनेयिसंहिताया भूमिकायां प्राप्यते तस्य भोजाश्रितत्वम् । परं न किमपि प्रमाणान्तरमिदानीं यावत् उपलब्धम् ।

**उवटस्य ग्रन्था:**—उवटभाष्यं निम्नग्रन्थानधिकृत्य वर्तते—

१. वाजसनेयि संहिता २. ऋक् प्रातिशाख्यम् ३. वाजसनेयिप्रातिशाख्यम् ४. ऋक् सर्वानुक्रमणी ।

बिहार-उड़ीसा रिसर्च-सोसाइटी इति संस्थया प्रकाशितायां मिथिलाया: सरिण्यां प्रतिपादितं यत् 'त्रिभाष्यरत्नम्' उवटेन कृतम् । तैत्तिरीयप्रातिशाख्ये भाष्यमेतत् । अस्य पाण्डुलिपि: दरभङ्गाप्रदेशे विद्यते । पूर्णमेतत् भाष्यम् । परं त्रिभास्ष्यरत्नमन्यत्र क्वचिदपि न उल्लिखितम् ।

एतदतिरिक्तं माध्यन्दिनशतपथब्राह्मणेऽपि उवटस्य टीका आसीत् । परं नास्ति अस्य किमपि प्रमाणम् ।[1]

१. आचार्य सायण और माधव, बलदेव उपाध्याय, पृ० ११४ ।

डा० राजेब[1] लिखितं यत् ३-४-११ निघण्टो: देवराजयज्वा उवटात् पङ्क्त्येकमुद्धरति । अमात्यपदसम्बन्धिनी पंक्तिरियम् · एकदैवागतममात्यपदं वाजसनेयिसंहितायाम् तत्र उवटभाष्ये देवराजोद्धतपंक्या: नास्ति कोऽपि संकेत: । ऋग्वेदेऽपि आगतामात्यशब्द: ।[2]

एतदपि संभाव्यते यत् देवराजोद्धतपंङ्क्तिरियम् उवटस्य ऋग्भाष्ये एवं भवेत् । ऋग्वेदमधिकृत्य उवटेन किमपि भाष्यं कृतमित्यस्य पुष्टयर्थम पर्याप्तं खलु डॉ० राजमहाभागानां मतम् ।

पांचवी औरिएण्टल कान्फ्रेंस, पृ० २६१.

ऋग्वेद ७।१५।३.

## पुस्तकसमीक्षा

संस्कृतरत्नाकरेणानेन पुस्तकसमीक्षा प्रकाशनं प्रारब्धम्, अत्र स्वीकृतेः पुस्तकसमीक्षां प्रकाश्य लाभोऽर्जितव्यः । समीक्षायै रचनायाः प्रतिद्वयं प्रेषणीयम् ।

# राष्ट्र में एक बार फिर आत्मविश्वास जागा है

## 1975-76

# नौजवानों के लिए नई सुविधाएं और नए अवसर

★ 10,490 होस्टलों को नियंत्रित मूल्यों पर आवश्यक वस्तुएँ पहुंचने से 9,56,000 से अधिक विद्यार्थियों को लाभ।

★ छपाई का सफेद कागज रियायती दरों पर सप्लाई करने से किताबों और कापियों के मूल्यों में कमी। कालेजों और स्कूलों में 88,600 पुस्तक-बैंक कार्यरत।

★ 103 व्यवसाय और 216 उद्योग अब अप्रेंटिसशिप योजना के अधीन।

★ 18,800 सीटें बढ़ने से अप्रेंटिसशिप योजनाओं के अन्तर्गत कुल 1,33,900 से अधिक सीटें। 1,28,900 सीटों पर अप्रेंटिस काम कर रहे हैं जिनमें से 28,000 (20 प्रतिशत से अधिक) अनुसूचित जाति, अनुसूचित जन जाति तथा अन्य पिछड़े वर्गों के हैं।

डीएवीपी 76/91

दूरभाष :२७८८६४

# अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य
## महत्वपूर्णानि प्रकाशनानि

| | | | |
|---|---|---|---|
| १. | विश्वसंस्कृतशताब्दिग्रन्थः (जम्मूकाश्मीर सम्बन्धी भागः) | ...... | ८०-०० |
| २. | विश्व संस्कृत शताब्दिग्रन्थः (आन्ध्रप्रदेश राज्यभागः) | ...... | ८०-०० |
| ३. | वैदिकविज्ञानम् (म० म० गिरिधरशर्मचतुर्वेदप्रणीतम्) | ...... | ८-०० |
| ४. | वैदिक विज्ञान (हिन्दी अनुवाद) | ...... | ८-०० |
| ५. | पुराणपारिजातः (म० म० गिरिधरशर्मप्रणीतः) | ...... | ८-०० |
| ६. | प्रमेयपारिजातः ( ,, ) | ...... | ८-०० |
| ७. | चालुक्यराज अय्यणवशचरित काव्यम् | | १५-०० |
| | अनुवादः —श्री विश्वनाथ शास्त्री भारद्वाजः | ...... | |
| ८. | संस्कृतरत्नाकरः (श्रीनेहरुश्रद्धाञ्जल्याङ्कः) | ...... | ८-०० |
| ९. | संस्कृतरत्नाकरः (श्री शास्त्रिसम्मानङ्कः) | ...... | १०-०० |

(विक्रेताओं को २५% कमीशन)

## संस्कृतरत्नाकरस्य स्वामित्वादिकं विवरणम्
## संस्कृत रत्नाकर के स्वामित्व का विवरण

१. प्रकाशनस्थानम्, भूपेन्द्रभवन कृष्णा मारकेट, पहाड़गंज, नई दिल्ली-११००५५

२. प्रकाशनावधि (त्रैमासिक)

३. मुद्रक (डा० गोस्वामी गिरिधारीलालः)
नागरिकता (भारतीया)

४. प्रकाशकः (डा० गोस्वामी गिरिधारीलालः)
नागरिकता (भारतीया)

५. सम्पादकः (डा० गोस्वामी गिरिधारीलालः)
नागरिकता (भारतीया)
प्राप्तिस्थानम्, भूपेन्द्र भवन, कृष्णा मारकेट, पहाड़गंज, नई दिल्ली ११००५५)

६. स्वामित्वम् (अखिलभारतीय संस्कृत-साहित्य-सम्मेलनस्य)

मया डा० गोस्वामिगिरिधारीलालेनोद्घोष्यते ममाधिकमज्ञानस्य तथा विश्वासस्यानुसारेण पूर्वोक्तविवरणं सत्यमस्ति ।

डा० गोस्वामी गिरिधारीलाल

F-2 (S/115) 55 Regd No. D-(c)-494

# अखिल भारतीय संस्कृत साहित्य सम्मेलन की कार्य समिति

**सभापति :** श्रीमती इन्दिरा गांधी, प्रधान मन्त्री, भारत सरकार, १—सफदरजंग रोड, नई दिल्ली।

**कार्यवाहक सभापति :** श्री विद्याचरण शुक्ल, सूचना एवंम् प्रसारण मन्त्री, भारत सरकार, ७—रेसकोर्स रोड, नई दिल्ली।

**उपसभापति :** १. डा० श्रीमती सर[illegible] महिषी, संसद सदस्य ३—[illegible]जंग रोड, नई दिल्ली।

२. श्री देवनन्दन प्रसाद यादव, शिक्षा उपराज्य मन्त्री, भारत सरकार ६—तुगलक रोड़, नई दिल्ली।

३. डा० सत्यव्रत, शास्त्री, एम० ए० पी० एच० डी०, संस्कृत विभागाध्यक्ष, दिल्ली विश्वविद्यालय, ३/५४ रूपनगर दिल्ली ११०००७

४. श्रीमती कमलारत्नम्, 'ईशान', एफ ·/७-हौज खास, नई दिल्ली-११००१६

५. श्री अक्षयकुमार जैन, प्रधान सम्पादक, नवभारत टाइम्स, बी० १०५ गुलमुहर पार्क, नई दिल्ली।

**महासचिव :** डा० गोस्वामी गिरिधारीलाल, शास्त्री, एम० ए० पी० एच०, डी० २५/३० पर्वी पटेल नगर, नई दिल्ली-११०००८

**अर्थ सचिव :** श्री बैजनाथ भास्कर, डायरेक्टर, ईश्वर इन्डस्ट्रीज ईश्वर नगर, नई दिल्ली-११००२०

**संयुक्त महासचिव :** १. श्री ओंकारसिंह 'राकेश', जे ३/५१—राजौरी गार्डन, नई दिल्ली-११००२७

२. श्री लल्लनप्रसाद व्यास, के० ३७ ए० ग्रीन पार्क, नई दिल्ली-११००१६

**सदस्य :** १. श्री कृष्णचन्द, उपराज्य पाल, राजनिवास, दिल्ली

२. श्री यशपाल कपूर, संसद सदस्य, सी० १/१६ हुमांयु रोड, नई दिल्ली

३. श्री बी० एन० शास्त्री, संसद सदस्य, ६५ नार्थ एवेन्यू, नई दिल्ली

४. डा० लोकेशचन्द, संसद सदस्य, जे/२२ सरस्वती विहार, हौज खास, नई दिल्ली-११००१६

५. श्री कान्तिप्रसाद मिश्र, ३/३ पूर्वी पटेल नगर, नई दिल्ली-११०००८

६. सेठ श्री गिरधारीलाल-सराफ, ३-बी पूसारोड, नई दिल्ली ११०००८

७. श्री रघुवीरसिंह शास्त्री, ए-२/८५ जनकपुरी, नई दिल्ली

८. श्री चमनलाल कतियाल, अर्थ मन्त्री, सनातन धर्म, प्रतिनिधि सभा पंजाब, भूपेन्द्र भवन, कृष्णा मार्केट, पहाड़ गंज, नई दिल्ली

९. डा० हुकमचन्द शास्त्री, प्रधानाचार्य, संस्कृत कालेज बघौला, पलवल (हरयाणा)

१०. श्री किशोरीलाल शास्त्री, महामन्त्री पंचनदीय संस्कृत साहित्य सम्मेलन, लोहा मण्डी, फगवाड़ा, (पंजाब)

दूरभाषम् : ४८३१७

## अखिल भारतीय संस्कृत साहित्य सम्मेलनस्य
## अखिल भारतीय संस्कृत विद्यापीठस्य च
## महत्त्वपूर्णानि प्रकाशनानि

| | | |
|---|---|---|
| १. विश्वसंस्कृतशताब्दिग्रन्थः (जम्मूकश्मीर सम्बद्धो भागः) | ... | मूल्यम् ३५.०० |
| २. वैदिक विज्ञानम् (म० म० गिरिधरशर्म चतुर्वेदप्रणीतम्) | ... | ५.०० |
| ३. वैदिक विज्ञान (हिन्दी अनुवाद) | ... | ५.०० |
| ४. पुराणपारिजातः (म० म० गिरिधरशर्मप्रणीतः) | ... | ३.०० |
| ५. प्रमेयपारिजातः ( ,, ) | ... | ३.०० |
| ६. चालुक्यराज अय्यणवंशचरित काव्यम् अनुवादकः—श्री विश्वनाथ शास्त्री भारद्वाजः | ... | ५.०० |
| ७. संस्कृत रत्नाकरः (श्री नेहरूश्रद्धांजल्यंक) | ... | ५.०० |
| ८. संस्कृत रत्नाकरः (श्री शास्त्रिसम्मानांक) | ... | ५.०० |
| ९. संस्कृत रत्नाकरः (श्रीमती इन्दिरा विशेषांक) | ... | २.०० |



# संस्कृत-रत्नाकरः

आषाढ़, श्रावण, भाद्रपद

सम्वत् २०३०

सम्पादकमण्डलम्

अध्यक्ष :

**डा० सत्यव्रत शास्त्री**



सदस्याः

**श्रीमती कमलारत्नम्**

**डा० लोकेशचन्द्रः**

**श्री वसन्त गाडगिलः**



प्रधानसम्पादक :

**डा० गोस्वामीगिरिधारीलाल**



प्रबन्ध सम्पादक :

**लल्लनप्रसाद व्यासः**





प्रकाशक :

**अखिलभारतीयसंस्कृतसाहित्य सम्मेलनम्**

१८, थियेटर कम्युनिकेशनभवनम्

कनाटप्लेस, नयी दिल्ली



मुद्रक :

**सैनी प्रिण्टर्स**

पहाड़ी धीरज, देहली-६

श्रीमन्तः ।

विदितमेव स्यात्तत्रभवतां यदनन्त-श्रीविभूषिताः का श्रीकामकोटि पीठाधीश्वराः जगद्गुरु-श्रीशङ्कराचार्यचरणाः पदयात्राप्रसंगेन उत्तरभारतभागतवन्तः ऋषीकेशे स्वर्धुनीतटे चातुर्मास्य-मनुष्ठास्यन्तीति। चातुर्मास्यकाले विविधेषु शास्त्रेषु वाक्यार्थाः प्रचलन्ति, विदुषो सम्माननं च प्रतिवर्षं क्रियते। अस्मिन्नपि संवत्सरे आगामि आगष्टमासस्य द्वितीये सप्ताहे ११ तः १४ पर्यन्तं शास्त्रार्थगोष्ठया आयोजनं भविष्यति। तस्यां गोष्ठयां वेदान्तमीमांसान्यायव्याकरण शास्त्रेषु निष्णातानाँ समेषां विदुषामुपस्थिति प्रार्थ्यते। होरार्धं यावत् एकैकस्य विदुषः अवसरो दीयेते शास्त्रचर्यायै। प्रतिशास्त्रे सर्वोत्कृष्टत्वेन निर्णीतिथ्यो विद्वद्भयः, प्रत्येकं सहस्रमुद्रापरिमितामितरे-भ्यश्च यथोचिताः पुरस्काराश्च श्रीचरणानां करकमलाभ्यामनुग्रहरूपेण दातुं व्यवस्था कृता। मनागमनव्ययः तृतीय श्रेणी धूमकटयावेन दीयेते। ऋषीकेशे निवासः योजनादिव्यवस्था च मठ-द्वारा विधीयेते।

ये तत्र भागं जिघृक्षन्ति, ते स्वनाम-सकेतादिकं योग्यता च पत्र द्वारा निम्नाङ्किते स्थाने प्रेषयन्तु। पत्रोपलब्ध्यनन्तरं तेषाँ वैयक्तिकया हवनपत्रं/मन्त्रणं प्रेष्येते।

मैनेजर
**श्रीकाञ्चीकामकोटिमठः**
यात्रास्थानम् आन्ध्राश्रमः
ऋषीकेशम्

# विषय-सूची

—०—



—:०:—



# सम्पादकीयम्

प्राचीनकालादेव पुरातनपाण्डुलिपीनां सङ्कलनं संरक्षणं चास्मद्देशजैर्धर्म इत्यङ्गीकृतम्। अतएव यत्र तत्र राज्याश्रयपरिपोषितानि ग्रन्थभाण्डागाराणि विलसन्ति स्म। ब्रिटिशशासकैरपि स्वकीयशासनकाले परस्सहस्राः पाण्डुलिपयः संस्कृतप्राकृतापभ्रंशभाषानिबद्धाः पण्डितानां गृहेभ्यो विचार्य विचार्य पाण्डुलिपिग्रन्थागारेषु संगृहीताः। अत एव कारणात्पर्याप्तोऽस्माकं ग्रन्थराशिः सुरक्षितस् तिष्ठति। ग्रन्थागारेषु पुनराधुनिकैर्वैज्ञानिकैरुपकरणैः सनाथितेषु कीटनाशकौषधैर्ग्रन्थानां कीटानुवेधपरिहारः क्रियते जर्जरीभूतानां च तेषां फोटोस्टेटपद्धत्या माइक्रोफिल्म-पद्धत्या वा प्रतिचित्रणं क्रियते प्रतिपृष्ठं प्लास्टिकोपधान-द्वारा वा तेषां सुरक्षा क्रियते। परं सन्ति एतेभ्यो ग्रन्थागारे सुरक्षितेभ्यो मातृकाग्रन्थेभ्यो व्यतिरिक्ताः परस्सहस्रा मातृकाग्रन्था ये पण्डितानां गृहेष्वेव वर्तन्ते रक्तवस्त्रैरा-वृताः। तेषामपि सुरक्षा ऽत्यन्तमावश्यकी। यथा ब्रिटिश-शासनेन मातृकाग्रन्थसङ्कलयितारो नियमतो नियुक्ता आसन् येषां स्थाने स्थाने गत्वा पण्डितगृहेभ्यो मातृकाग्रन्थानां प्राप्यताप्रवेदने राज्यकृते क्रयरूपेणोपहाररूपेण चोपलम्भ एव वा कार्यमासीत्तथाऽद्यतनेन शासनेन स्वकीयेनापि समाचरितव्यमनतिबहुनैव कालेन, मा स्माऽयममूल्योऽ-स्माकं ग्रन्थराशिः कालकवलितो भूत्। अद्यत्वे स्युर्नाम केचन विद्वांसो ये स्वगृहे वर्तमानान् मातृकाग्रन्थान् परिशीलयेयुः परं तेषामुत्तराधिकारिणोऽपि तथैव प्राचीन-विद्यारक्षका भविष्यन्तीति न शक्यते निश्चयेन वक्तुम्। अन्यान्या अर्थकरीर्विद्या अभ्यस्यन्तस्ते संस्कृतादिविद्याः प्रति औदासीन्यं भजेयुरनास्थां च तत्र कामपि कलयेयुः, मातृका-ग्रन्थानां सुरक्षां प्रति च न तथाऽवहिता भवेयुर्यथा तेषां पूर्वजाः, तेन च महाननर्थः समापतेत्। तस्यानर्थस्य परिहाराय, भारतीय सांस्कृतिनिधेश्च परित्राणाय भारत-शासनेनाकालहीनं प्राचीनानां पण्डितगृहेष्वद्यापि विशाल-सङ्ख्यायां समुलभ्यमानानां मातृकाग्रन्थानां मातृकाग्रन्थ-संग्रहालयेषु संग्रहाय प्रयतितव्यम्। एतत्कार्यार्थं चापेक्षितोऽर्थ-राशिरवश्यं विनियोक्तव्यः। संस्कृतपण्डितैरपि, विशेषतस्तु तैर्येषामुत्तराधिकारिणः संस्कृतानभिज्ञाः स्वयमेवाहमह-मिकया स्वस्मिन् विद्यमानाः सर्वेऽपि संस्कृतादिभाषोपनिबद्धा मातृकाग्रन्था अर्थबुद्धिं परिहाय पुण्यबुद्धिं चाधाय स्वस्वराज्यमातृकाग्रन्थागारेभ्यः समर्पयितव्या येन तेषां विपरिलोपो मा भूदायतौ चापि समुपलम्भः सुनिश्चितः स्यात्॥

———

# कोऽसौ रसः

## राधाकृष्ण शास्त्री, साहित्य-वेदाचार्य



आवैदिककालात् अद्य यावत् कोऽसौ रसः इति विषयमधिकृत्य बहुविचारितं विचारपेशलैः मनीषिभिः। तत्र 'रसो वैस' इति श्रुतिवचन प्रामाण्येन मुनिभिः जीवनस्य परमोद्देश्यभूतं अलौकिकानन्दात्मकं रसमास्वादयितुं विविधविषयकग्रन्थाः निर्मिताः। वयमत्र साहित्यशास्त्रमधिकृत्य विचारयामः। रस-विषये "रसो ह्यं लब्ध्वाऽऽनन्दी भवति" इति श्रुतिवचनात् काव्यपरिशीलन जन्यः यः लोकोत्तराह्लादात्मक आनन्द-रसास्वादः सचेतोभिः हृदयगोचरी क्रियते। स सच्चिदानन्दः ब्रह्मण एवानन्दस्थ एकं प्रतीकं अस्ति इति प्रतिपाद्यते। उक्तमपि विश्वनाथेन "वेद्यान्तरस्पर्शशून्यः, ब्रह्मानन्दसहोदरः" येन चायं रसः सहृदयहृदयैः नाऽपलपितुं शक्यते। त एव सहृदहृदयाः एतत् विषयक साक्षिणो भवन्ति। परं कोऽयं रसः का चास्य परिभाषा किदृशी चोत्पत्तिः कथञ्च काव्येषु संघकृते, कथञ्चाङ्गीक्रियते इति सर्वमपि सम्पादयितुं परमर्षिना साहित्यशास्त्रस्य ऋषी भूतेन मननशीलेन भरतमुनिना—'विभावानुभावसञ्चारीसंयोगाद्रसनिष्पत्तिः'। अग्रे च सर्वैरपि साहित्यिकैः विस्तरेण तदेव सूत्रमङ्गीकृत्य स्वकीया रसविषयक मीमांसा अन्येषां समक्षे समुपस्थापिता। यथा च विश्वनाथेन तस्यैवाशयमादाय—

'विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा,
रसतामेति इत्यादिः स्थायीभावः सचेतसाम्'

इति कारिकया रसनिष्पत्तिप्रकारः स्वसाहित्यदर्पणे प्रदर्शितः। तस्यामाशयः, यथा दुग्धं पदार्थान्तर-संयोगेन रूपान्तरं परिणतं सत् दधीत्युच्यते, यथा वा आमिक्षा (आम) कर्पूरखण्डादियोगेन रूपान्तरपरिणता सती प्रपाणकमुच्यते। तथैव इत्यादिः स्थायिभावः सत्काव्यनिपुणकविद्वारा कयापि विलक्षणया वैदग्ध्यप्रणाल्या काव्यनाट्यसमर्पितविभावानुभावसञ्चारियोगेन चिदानन्दचमत्कारिस्वरूपेण परिणतः सन् रसपदेन व्यपदिश्यते। यथा चोक्तमपि प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत्। यद्यपि भरतसूत्रानुसारेण रसविषये विदुषां बहवः दृष्टिकोणाः दृष्टिपथमवतरन्ति, तथापि सहृदयानां हृदयं गमयितुं कश्चन् रसनिष्पत्तिप्रकारः प्रकटीक्रियते। यथाऽऽलम्बनविभावेनाऽलम्बितः, उद्दीपनविभावेनोद्दीपितः अनुभावेनानुभावितः, सञ्चारिभावेन सञ्चारितः सहृदयहृदयानां हृदयेषु वासनारूपेण विद्यमान, इत्यादिस्थायिभावः प्रापणकन्यायेन रसरूपतां आपद्यत्त इति। एवञ्च लोके ललनादिभिरालम्बनकारणैः चन्द्रिकादिभिरुद्दीपनकारणैः, रोमाञ्चादिभिः, उत्कण्ठादिभिः सहकारिभिश्च स्थायिनो इत्यादेर-

नुमितिविषये काव्यार्थपरिशीलनबलेन झटिति प्रवृत्तिमतां सामाजिकानां सहृदयानां वासनारूपेण स्थितः काव्ये कायिकवाचिक सात्विकाहार्यरूपेणाभिनयेन च तैरेव कारणत्वादिव्यपदेशपरित्यागेन विभावानुभावसञ्चारणरूप व्यापारसूत्रतया लौकिकविभावानुभावसञ्चारिभावपदव्यपदार्थे ममैवेते शमोरैवेते उदासीनस्यैवेते इति सम्बन्धिविशेषस्वीकार नियमस्य न ममैवेते न शमोरैवेते नोदासीनस्यैवेते इति सम्बन्धिविशेषपरिहार नियमस्य च ज्ञानात्। शीतत्वादिविशेषांशं विहाय कान्तत्वादिसाधारणनयेन अभिव्यक्तो इत्यादिस्थायिभावः दूरीकृतपरिमित प्रमातृत्वादि निजधर्मतया प्रादुर्भूतु, अपरिमितप्रभावेन प्रमात्रा सकलहृदयसंवादकारिणा प्रमातृविषये सम्बन्धाग्रहरूपेण साधारण्येन स्वीकार इवाभिन्नोऽपि प्रत्यक्षीकृतः चर्व्यमाणतया रस इति प्रतीतिगोचरः प्रापाणकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् अन्यत् सर्वमिव तिरोदधत् केवलं ब्रह्मास्वादमिवानुभावयन् अलौकिकाऽनन्दचमत्कार शाली शृङ्गारादिको रसः भवितेति। तत्र यथा भूतले राजत्वेन सूक्त्यवगाहि भूतलं रजतवदिति ज्ञानं सूक्त्यंशे लौकिकं रजतांशे त्वलौकिकम् । तथैव व्यञ्जनासहकृत आस्वादनप्रकारेण रामोऽय सीताविषयक रतिमानित्याकारकः सामाजिकवासनायां इत्याद्यभेदं स्वस्मिन् नायिकाभेदं धारयन् रससाक्षात्कारो वा वासनांशे लौकिको रत्याद्यंशे अलौकिके इति । भूतलरजतवदिति भ्रमे शुक्त्यत्वादिकमिवात्र वासनत्वादिकं न भासतेइत्यभिबोधनीयम् । व्यक्तशब्देन अज प्रदीपेन घट इव न व्यक्त क्रियते अपितु आस्वादप्रकारतां उपनीयते इति । अन्यथा प्रदीपेन घट इव व्यज्यते इति स्वीकारे रसस्य पूर्वसिद्धिः उक्ता भविष्यतीति । यतः प्रतीतेः पूर्वं रसस्यासत्वे न पूर्वसिद्धस्येव वस्तुनोऽभिव्यक्तं सम्भवेन घटादेरिव रसस्याभिव्यक्तेः वक्तुमशक्यत्वात् ज्ञानविषयतापन्नस्येव इत्यादे रसत्वेन सहृदयहृदयैरास्वाद्यमानत्वात् एतदेव प्रतिपादयितुं शक्यते यदपूर्वोऽयं रसः न हि प्रदीपेन घट इव व्यज्यते । उक्तमपि—

स्वज्ञानेनान्यधीहेतु, सिद्धेऽर्थे व्यञ्जको मतः,
यथा दीपोऽन्यथाभावे, को विशेषोऽस्य कारकान् ।
। इति ।

एवञ्च पाकसम्बन्धेनोदनत्वं प्राप्ततण्डुलोदनत्वेन व्यवह्रियते तथैव प्रतीतिसम्बन्धेन रसरूपत्वं पाप्तइत्यादिः तादात्म्येन ध्यस्ता सामाजिकवासना रसत्वेन व्यवह्रियते यथोक्तमपि काव्यप्रकाशे—'सामाजिकानां वासनात्मतया स्थितो इत्यादिभावो रसः' अतः काव्यात् न साधारणव्यक्तीनां अस हृदयानां रसास्वादः सम्भवति। इत्यादिः तादात्म्येन प्रतीयमानायाः वासनाया एव तदास्वादहेतुत्वात् ।

उक्तमपि—

'सवासनानां सम्पन्नानां, रसस्यास्वादनं भवेत्.
निर्वासनास्तु रङ्गान्तः, काष्ठकुड्यादिसन्निभाः ।'

रसस्य वैलक्षण्यं एतदस्ति यदस्य स्वशब्देन केवलं विभावादि प्रतिपादनेन वा न सचेतसां चेतसि मनागपि रसास्वादः सम्भवति । यथा—

'तामुद्वीक्ष्य कुरङ्गाक्षीं, रसो न कोऽप्यजायत,
सरसो विपरीतश्चेत्, स रसत्वं न मुञ्चति
साक्षरा विपरीता चेत्, राक्षसा एव केवलम् ।'

इत्यादौ तादृशालौकिकचमत्कारशालीत्वेन

रसादिप्रतीतेरनुव्यवसाय विरहात् । तस्मात् व्यञ्जनासहकारेण वाच्यप्रतीतिसमनन्तरं अचिरादेव प्रधानतया सहृदयचर्वणगोचरीभूत् उत्पलशतपत्रव्यतिभेदवत् असंलक्ष्यक्रमव्यङ्ग्यः सतत्वोऽयं रसः ध्वनेरात्मा । संख्याविषये सत्यामपि विमतौ मनीषिणां दशसंख्या यावत्तु सर्वसम्मतिः दृष्टिपथमवतरत्येव ।

समेषाञ्च तेषां निरतिशयचिदानन्द चमत्कारत्वं सिद्धम् एवं लोकोत्तराह्लादचमत्कारस्वरूपोऽयं रसः सहृदयानां हृदयं आह्लादयति । एतत्त्ववश्यं अत्रवेयं रसवादीनां विश्वनाथाद्यालङ्कारिणां मते न केवलं रस एव काव्यस्यात्मा अपि तु भावादयोऽपि । रस्यते आस्वाद्यते इति रसः व्युत्पत्त्या आत्मत्वेन स्वीक्रियन्ते । यदा इत्यादयो भावाः रसरूपतां सम्पादकविभावादिसम्पर्करहिताः भवन्ति, सम्यक् परिपोषं च नाऽऽसादयन्ति तदा ते रसरूपेण परिणमन्तो भावपदेन व्यपदिश्यन्ते । एवं इत्यादेरनौचित्यप्रवृत्तत्वे रसत्वे न परिणामात् रसाभासपदेन व्यवह्रियन्ते । उक्तमपि अनुचितो रसः रसाभास, इति । परन्तु तेषां रसाभासादीनामपि काव्ये साक्षाद्रसविरहेऽपि काल्पनिकरस व्यवहारो भवत्येव ।

यथा चोक्तमपि—

'रसभावो तदाभासो भावस्य प्रशमोदयो,
सन्धि शबलता चेति सर्वेपि रसनाद्रसाः ।'

एवं यत्र प्रस्तुतरसापेक्षया अन्यस्यैव वाच्यालंकाररसादिरूपव्यङ्ग्यस्य वाच्यस्य वा प्राधान्यं तत्रापि रसस्य विच्छित्तिविशेषाधायकत्वभावेन रसत्वेन व्यवहारो न भवति । अपितु रसस्याङ्गित्वे रसवदलङ्कारः, भावस्याङ्गित्वे प्रेयोऽलंकारः, रसभास भावाभासयोरङ्गित्वे उर्जस्वी अलंकारः । इत्यनया रीत्या तेषां अलङ्कारत्वेनैव व्यवहारः न तु रसत्वेन अलङ्कार्या भावात् ।

एवं संक्षिप्तविवेचनेन प्रतीयते यत् ब्रह्मानन्दसहोदरस्यालौकिकस्यास्य रसस्य विवेचनं साहित्यमर्मज्ञैः कथं सूक्ष्मसमीक्षणेन विहितं यत् तेषां मनोवैज्ञानिकत्वं आध्यात्मिकत्वञ्च व्यनक्ति । संस्कृतसाहित्यजगति रस एव काव्यात्मत्वेन स्वीकृतः, आध्यात्मिकक्षेत्रे च 'रसो वै स' इति वचनेन ब्रह्मस्वरूपत्वेनाङ्गीकृतः । इत्थंभूतस्यास्य रसस्य व्यापकं परिशीलनं विहितं समीक्षकैः तदौचित्यं विभर्ति विद्वत्समाजे ।

---

# राष्ट्रभक्तिः

(सूर्यप्रसादमिश्रः, दिल्ली)

( १ )

अस्माकं भारते देशे,
विविधा वादिनो जनाः ।
राष्ट्रभक्तौ समावद्धाः,
सूत्रे मणिगणा इव ॥

( २ )

यदा पाकेन देशेऽस्मिन्,
क्रूरमाक्रमणं कृतम् ।
तदैकत्वयुताः सर्वे,
शत्रून् हन्तुं समुद्यताः ॥

( ३ )

विपत्तावुदये वाऽपि,
भावपूर्णा जनैकता ।
देशे यत्र भवेत्तत्र,
सर्वसम्पत्सुखावहा ॥

( ४ )

यस्मिन् कर्मणि यो लग्नः,
निष्ठावान् तत्रस्याच्च सः ।
राष्ट्रभक्तिर्मनोज्ञैषा,
लोककल्याणकारिणी ॥

( ५ )

भारते लोकतन्त्रेऽस्मिन्,
वयं वर्तामहे ध्रुवम् ।
सविशेषञ्च लोकानाम्,
राष्ट्रभक्तिर्विवर्धताम् ॥

( ६ )

नानाविधोविकासस्यात्,
भारतस्य दिवानिशम् ।
परस्परं जनानाञ्च,
प्रेमधारातिजायताम् ॥

( ७ )

सदेत्थं भारतो देशः,
नाना संस्कृतिभूषितः ।
राजतां राजतां नूनम्,
राष्ट्रभक्तिसमेधितः ॥

—oo—

# अधुना संस्कृतस्यावश्यकता

( सूर्यप्रसादमिश्रः )

अद्य संस्कृतविषये प्रशासनस्य समाजस्य च। समस्ति प्राधान्येन तर्क एषः, यदधुना संस्कृतस्य कावश्यकता ? यतोऽद्य तु विज्ञानयुगस्समुज्जृम्भते। एतस्मिन् युगे च संस्कृतं नोपकरोति किमपि। संस्कृतविचारधारा त्वस्मान् प्राक्तनासु शृङ्खलास्वेव निबध्नाति। अत एवाद्य प्रगतिपथं नेतुं संस्कृतभाषैषा नितरामयोग्येति। परं मम तु मते तत् कथनं सिकतानिकायनिर्मितागारमिवाभाति। यतो हि—

''भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा।''

अथ सर्वोऽपि समाजो बहिरुज्ज्वलः किन्त्वन्तर्मलिनः, सर्वोऽपि वाचि सुधामयः किन्त्वन्तर्विषाक्तः प्रतिभाति। अतोऽस्य समाजस्य परिशोधनं सद्विचारमन्तरा न कर्तुं शक्यते केनापि। सद्विचाराणामेतेषामाध्यात्मिकपथेनैव समुद्भवः कर्तुं शक्यते। यतोऽध्यात्मवादः सर्वविधसुखाय, भौतिकवादश्च सर्वथा क्लेशायेति। एतेन भौतिकवादस्यास्य किमपि माहात्म्यमेव नास्तीति न प्रोच्यते। अपि त्वस्य भौतिकवादस्य सर्वथा सर्वोपरि प्राधान्यं नास्तीति मेऽभिमतिः।

यद्यप्यद्य विज्ञानस्य प्राधान्यम्, परञ्चास्य विज्ञानस्योपरि प्रज्ञाप्रभापि राराज्यते। एतस्याः ऋतम्भरायाः प्रज्ञायाः अन्वेषणमपि विधेयम्। प्रज्ञान्वेषणमन्तरा तु विज्ञानं नाशायैव न विकासायेति सम्मन्येऽहम्। भौतिकवादस्य सत्ता तु शरीरसम्पोषणाय एव स्वं सर्वभावेनार्पयति। ततः परं जीवस्य सौख्यसम्पादनाय तस्य पार्श्वे किमपि देयं नास्ति। यतोहिजीवस्य तात्त्विकं भोजनं तु आध्यात्मिकं तत्त्वमेव समुपलब्धुं शक्यते। अतोऽस्याध्यात्मतत्त्वस्य सम्प्राप्तये संस्कृतस्यावश्यकताद्यापि महते कल्याणायैव वेविद्यते।

अद्य संस्कृतभाषैषास्मान् 'वसुधैव कुटुम्बकम्' इति शिक्षयति। जीव्याः जीव्यासमिति, जीवनपद्धतिं स्मारयति। साहसे श्रीर्वसतीति मधुरमधुरं बोधयति। मा गृधः कस्य स्विद्धनमिति, परधनेषु लोभं विनिवारयति। तेन त्यक्तेन भुञ्जीथा, इत्यनेन त्यागभावनां दृढयति। शतहस्तैः समाहर' सहस्रहस्तैः, सङ्किर, इत्यनेन दानभावनमाविष्करोति। 'ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्' इत्यनेन अस्माकमहंभावनामपनुदति परेशभावनाञ्च दृढीकरोति। किं वा ब्रूमि एषा गिराली मरालीव कुत्रकं न सुखयति ? अपि त्वियं तु अस्माकं आचारपद्धतिम् विचारधारां नैतिकं जीवनम्, चिकित्साशास्त्रं कौटुम्बिकं जीवनम्, सामाजिकं जीवनम्, राष्ट्रियं जीवनं सर्वतोभावेनोपकरोति।

अद्य वर्तते परिवारनियोजनस्य प्रचारः। परमेषासुरगवी यदि समधीता स्यात्तर्हि अल्पव्ययेः

नैवास्य परिवारनियोजनस्य प्रसारः कर्तुं शक्यते। यतोऽस्यां निबद्धं स्मृत्यादि धर्मशास्त्रमस्मभ्यं तं पन्थानमेव प्रदर्शयति।

अद्य नेतृभिर्निगद्यते यद्देशेऽस्मिन्नेकस्मिन् दिने न केनापि ग्राह्यमन्नम्। परमत्र तु व्रताचारोपदेश एव तत्कार्यमनायासेन सम्पादयति। अस्माकं व्रतविधौ तु स्वेच्छाऽपि वर्तते। तत्र मानवभावनायाः यमनात्मिका भावना नास्ति। परं नेतृभिः प्रचाल्यमानः एकस्मिन् दिने देशे कुत्रापि नान्नं ग्राह्यमित्यादेशः समुत्पीडनभावमेव पुष्णातीति।

अद्य भावनात्मिकाया एकतायाः प्रसारायापि भूयान् प्रचलति प्रयासः, परं कुत्रापि कोऽपि लाभो न परिलक्ष्यते। यदि संस्कृतस्य प्रोत्साहनं सम्यक् कृतं स्यात् तर्हि सुखेनैवैषा भावना समाजे समुद्भाविता स्यात्।

यतः—अत्र तु प्रेम्णो माहात्म्यं प्रभूतं गीतं वर्तते। कुतः? यत्र कीटयौनौ वेविद्यमाना दारुभेदनिपुणा द्विरेफाः अपि प्रेम्णः प्रभावेण कमलतन्तुव्यवच्छेदने परतन्त्राः, तदा विवेकभराणां जनानां का कथा? यथा—

दारुभेदनिपुणोऽपि षडङ्घ्रि-
निष्क्रियो भवति पङ्कजकोषे।

संस्कृतभाषैषा भारतस्य प्राणभूता भाषाऽस्ति। एषैव समस्तं भारतमेकसूत्रे बध्नाति। अतः भारतस्य गौरवस्याभिलाषुकैर्नेतृभिर्गजनिमीलिकयैव न भाव्यम्। अन्यथा परतन्त्रे भारते यन्न जातं तदस्मिन् स्वतन्त्रे भारते सम्भविष्यति। त्रिभाषाफार्मूलेति, राजकीये निर्णयेऽपि संशोधनस्य महती आवश्यकता वर्तते। यतस्तत्र संस्कृतस्य किमपि स्थानमेव नास्ति। भारतेदेशे कुत्रापि गम्यते तत्र सर्वत्र दृश्यते यद् मानवजीवनं जन्मनः प्रारभ्य लयपर्यन्तमेषा देवभाषैव समुपकरोति। इदमधिकारिभिर्नूनमेवावधेयं यत् प्रभूतवाङ्मयभरा सुरभारतीयं कदापि विनष्टा न भाविनी। यतो हि सत्यमेव जयते नानृतम्। यदि शासनेन त्रिभाषास्वस्याः स्थानं निर्धारितं क्रियते तर्हि तेषां शासनकालस्येतिहासे स्वर्णाक्षरैरङ्कनं भविष्यति। अपि चास्य देशस्य कृते तेषां भूतपूर्वायाः निष्ठायाः परिचयोऽपि स्फुटी भविष्यति।

अद्य सार्वकारैर्भाषाविषये यदापि परिचिन्त्यते? तदा तत्र सुरभारतीसेवापराणां विदुषां कोऽभिप्रायः? इति परिज्ञातुमवसर एव न दीयते। इदं महते आश्चर्याय भवति। यतो हि ये शिक्षकाः अध्यापकाः प्राध्यापकाश्च प्रत्यहं छात्रेषु निकटतमा भवन्ति, वस्तुतः त एव सम्यग् जानन्ति यत् शिक्षानीतौ कुत्र किञ्च परिवर्तनं विद्यार्थिनां देशस्य च हिताय भविष्यतीति।

हन्त! अद्य भारतीमन्दिराणि राजनीति मन्दिराणि क्रियन्ते। तत्र विद्यार्थिनां ज्ञानधाराऽपि विपरिवर्तिता विद्यते। एवं विधे कठिनतमे व्यतिकरे विवेकभरैरधिकारिभिर्यदि कापि समीचीना चिकित्सा न क्रियते तर्हि महती शोचनीया दशा भविष्यति।

अन्यासां भाषाणां भाषात्वेन मम विद्वेषो नास्ति। अस्माकं तु दुःखं तत्रास्ति यत् संस्कृतभाषाऽधुना जनजीवने किमपि नोपकरोतीति कथयन्ति तेभ्यो मम विनम्रं निवेदनमिदं यद् हृदयस्य संस्कर्त्री, बुद्धितत्त्वस्य च विकासकर्त्री किं संस्कृतभाषा नैव? अन्तेऽहं स्वतन्त्रेभारतेऽस्मिन् सुरभारत्या अस्याः सुखोदर्कं कामयमानो विश्वेशं प्रार्थये यत् सर्वत्र सुरभारत्याः प्रसारः प्रचारश्च भारतीयगौरवस्य संरक्षणाय भूयादिति।

# अस्ति कश्चिद् वाग्विलासः

**ले० रामदेव झा 'विनोद'**

अस्ति देशः स्वतन्त्रोऽयं गणतन्त्रात्मको महान् ।
यस्मिन्नेताऽभिनेता च, पूज्यते केवलं जनैः ॥१॥

कश्चित् किञ्चित् प्रियं कृत्वा, विप्रियं सर्वमाचरेत् ।
कृतघ्नश्च गोघ्नश्चैव, भारतीयोह्यसौ भवेत् ॥२॥

वाग्विशेषे सदा तिष्ठेत्, वसुधैव कुटुम्बकम् ।
मनस्यन्यद् वचस्यन्यत्, कर्मण्यन्यद् यथार्थता ॥३॥

स्वार्थे सर्वत्र यत्नः स्यात्, परार्थे कार्यनाशकः ।
स एव ज्ञानिनां श्रेष्ठः, तालो वृक्षेषु वै यथा ॥४॥

मिथ्याचारविचाराभ्यां, यो जनः सुपरिष्कृतः ।
सदाऽसौ सफलः सम्यक्, सदाचारीति कथ्यते ॥५॥

अस्मिन् कलौ युगे काले, महार्घे प्रतिवासरे ।
स्वामी भवति सन्यासी, विरक्तो वै गृहीजनः ॥६॥

सर्वे भवन्तु कवयः, सर्वे सन्तु च वानराः ।
सर्वे काव्यानि कुर्वन्तु, विनोदेनेह नाथ्यते ॥७॥



# श्रीफलम्

(हेम 'भारती', आगरा)

मराठीभाषायां श्रीफलशब्दः नारिकेलफलम् (नारल) इत्यर्थे प्रयुज्यते व्यवहारे केषांचन वस्तूनाम् उपयोगः यथा तत्तस्मिन् मर्यादितेक्षेत्रे एव भवति यथा धार्मिकानुष्ठानार्थम् उपयुज्यमानानि स्त्रुक्-चमस-कमण्डलादीनि पात्राणि यद्यपि भोजनादिव्यवहारे उपयोक्तुं सुशकानि तथापि तानि प्रायः तत्तक्षेत्रं परित्यज्य अन्यत्र नोपयुज्यन्ते। श्रीफलशब्दो अयं नारिकेलफलसमानार्थकः प्रायः धार्मिकानुष्ठानेषु सभाजन-समारोहे च प्रयुज्यते नान्यत्र आपणादिषु व्यवहारेषु। शब्दानां प्रयोगविषये यदिदं वैषम्यं तत्प्रादेशिकमपि संभवतीति महाभाष्ये पस्पशायां सनिदर्शनमुक्तम्। "ते ते शब्दाः तत्र तत्र नियतविषया दृश्यन्ते। तद्यथा शवतिर्गतिकर्मा कम्बोजेषु एव भाषितो भवति विकार एवैनमार्या भाषन्ते शव इति। हम्यतिः सुराष्ट्रेषु रंहतिः प्राच्यमध्येषु, गपममेवत्वार्याः प्रयुञ्जते। दालिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु इत्यादिना प्रघट्टकेन। तत्रैवं वैषम्यं कुतः भवति, तत्रापि मराठीभाषायां श्रीफलशब्दस्य नारिकेलफलरूपः अर्थः कथकारं रूढः कदा रूढ इति विषये नैके विकल्पाः ममान्तरंगे उत्पद्य दरिद्राणां मनोरथा इव तत्रैव स्वयं विलीनाः। शारदात्माश्रित्यैव सर्वमिदमुच्यते।

पण्डितराजेन जगन्नाथेन स्वरचयितायां लवंगीप्रशंसायां 'कुचौ श्रीफले' इति तस्याः सौन्दर्यं वर्णितम्। केनचन महाराष्ट्रीयेण रसिकपण्डितेन तस्य मराठीभाषायां भाषान्तरम् 'दोन नारलासारखे दोन स्तने' (नारिकेलफलद्वमिव स्तद्वनम्) इति कृतं मयावलोकितम्। प्राचीनानां संस्कृत-काव्यवाचनेन वासितान्तःकरणः यः कोऽपि तैः संकेतैः तथा उपहतो भवति यथा तत्र संकेते पनागपि कृतेनान्यथा-भावेन स अस्वस्थतां भजते। श्रीफल (नारिकेलस्य) स्तनोपमानतां पण्डितराज जगन्नाथकृतं। पठित्वा मम मनः तथा अस्वस्थम् अभवत् यदहं श्रीफलशब्दान्वेषणे प्रयत्नपरो अभवम्। वैदिकपदानुक्रमकोषमारभ्य अर्वाचीन-भाषाकोषपर्यन्तम् अनेके कोषाः मया अवलोकिता निघण्टो तद्व्याख्यानरूपे यास्कीये निरुक्ते वा श्रीफल शब्दो नैवासादितः। विश्वेश्वरानन्द-वैदिक-संशोधन-संस्था द्वारा प्रकाशित वैदिकपदानुक्रमकोषस्यावलोकनेन इदमघगतं यदयं शब्दः नैकासु उपनिषत्सु सूत्रेषु च प्रयुक्तो वर्तते इति। यतः उपनिषत्सु (वस्तुतः तथात्वेन प्रसिद्धेषु ग्रन्थेषु) अयं श्रीफलशब्दप्रयोगः, अतः एव स वैदिकः तथैव प्राचीनाः अपि इति यद्यपि गले पतित तथापि तत्रत्या विषयाः, भाषाः, रचनाभरणिः इत्यादिकं यदि विचार्येत तदा ते ग्रन्थाः अर्वाचीनाः इत्येव अंगीकर्तव्यं स्यात्। विक्रमांक-देवचरिते श्रीफलशब्दः स्तनोवमानतया प्रयुक्तः उपलभ्यते।

कासुचन उपनिषत्सु सूत्रेषु च प्रयुक्तः श्रीफलशब्दः पूर्वापरसंदर्भपर्यालोचनया बिल्वार्थे एव अतितरां सुसंगतः प्रतिभाति। तत्रापि क्वचन नारिकेलरूपः अर्थः नितरां विसंगतः एव स्यात्। लौकिकसंस्कृतवाङ्मये प्रयुक्तस्य श्रीफल-शब्दस्यार्थे-जिज्ञासायां नामलिंगानुशासनम् अर्थात्

अमरसिंहविरचितः अमरकोष इति प्रसिद्धः कोषः प्रमाणत्वेन उपस्थितो भवति। तत्र कोषे बिम्वे शाण्डिल्यशैलूषोमालूरश्रीफलावपि २-४-३२ इति श्लोकार्धे श्रीफल-शब्दस्य अर्थान्तरं तत्रामरकोष न निर्दिष्टम्। अन्ये अपि मेदिनी, वाचस्पत्यशब्दकल्पद्रुमप्रभृतयः प्राचीना अर्वाचीनाश्च संस्कृतकोषाः शब्दरत्नाकरः संस्कृतप्राकृतकोषाः अपि श्रीफलशब्दस्य बिल्व इति एकमेवार्थं लिखन्ति। नारिकेल इति अर्थं द्वितीयार्थतयापि नोल्लिखन्ति। आपटे संस्कृत इंग्लिशकोषे श्रीफलशब्दस्य प्रथमोऽर्थः बिल्ववृक्षः द्वितीयश्च नारिकेलम् इति निर्देशो वर्तते। कंवलमराठी कोषेषु नारिकेलं (नारल) मुख्यार्थत्वेन प्रदर्श्य अनन्तरम् पूगफलम् (पोफली) आमलकी आमली इत्यादीन्यर्थान्तराणि निर्दिष्टानि सन्ति। केषुचन हिन्दी गुजराती कोषेषु अपि क्वचन बिल्वफलम् इत्येव क्वापि नारिकेलम् इत्येक एव क्वचन अर्थद्वमपि पदत्तमुपलभ्यते। प्राचीने मराठी वाङ्मये श्रीफलशब्दः नारल इत्यर्थे बहुत्र प्रयुक्त इत्यत्र विषये केषुचन मराठी कोषेषु केचन संदर्भा अपि निर्दिष्टाः वर्तन्ते।

श्रीफलशब्दस्य निरूपितस्तावत श्रीप्रदं फलम्, श्रीयुक्तं फलम् श्रीप्रदं फलम् श्रीप्रियं फलम् इति एवं बहुधा उत्तरपदलोपिता तत्पुरुषेण कोपाव्याख्यासु प्रदर्शितास्ति। कदाचित् निरुक्तीनाम् एतासां काश्चन मूलाधाररूपा आख्यायिका अपि पुराणादिवाङ्मये लोकोक्तिषु वा प्रसिद्धाः स्युः परं निर्वचनपरैः व्याख्याकारेण तादृशाख्यायिकाः प्रमाणान्तरं वा निर्दिष्टं नोपलभ्यते।

संस्कृतवाङ्मये नारिकेलफलरूपे अर्थे श्रीफलशब्दप्रयोगः गरुणपुराणे उपलभ्यते। तत्र संदर्भः, आचारपरम्परा उपलब्धानि भाषान्तराणि च नारिकेल फलरूपेऽर्थे एव संगच्छेरन्। तत्र बिल्वफलम् अन्ये वा कोषानिर्दिष्टा अर्थाः न जातुचित् औचितीं विन्देरन्। सांप्रतमेव प्रसिद्धिमापन्ने स्वर्गीय डा० मा० श्री अणेविरचिते तिलक यशोर्णवे द्वितीयतरंगे श्रीफलशब्दः नारिकेलार्थे प्रयुक्तः उपलभ्यते परं स शब्दप्रयोगः मराठीभाषायाः प्रतिगृहीत इत्यपि कल्पयितुं सुशकम्।

यद्यपि अमरकोषादिभ्यः प्राचीन-संस्कृतकोषेभ्यः आरभ्य शब्दकल्पद्रुमादीनि अर्वाचीनान् कोषान् यावत् सर्वेषु कोषेषु श्रीफलशब्दस्य नारिकेलफलम् इत्यर्थः नैव निर्दिष्टः। तथापि पाश्चात्यदेशीयेन श्री मोनियर वित्यममहाभागेन विरचिते संस्कृत-इंगलिश-कोषे श्रीफलशब्दस्यनारिकेलम् इत्यपरः अर्थः प्रदत्तः, नेतावदेव किन्तु तत्रार्थे गरुणपुराणस्य संदर्भो अपि निर्दिष्टः, एतेन पाश्चात्यविदुषां कोषरचनायां सर्वकषमवधानं कियतीं कोटिमापन्नमसीदिति भारतीयैः कोषपण्डितैः अवश्यमवधेयम्।

'शिरः फलं' शब्दः नारिकेलफलार्थे त्रिकाण्डेशेषकोषे वर्त्तते। शिरः इव फलमस्य इति तत्र व्युत्पत्तिरपि वाचस्पत्ये प्रदत्तापीत। नवीनाः बहवः कोषकारा अत्रार्थे संवदन्ति। परं शिरःफल-शब्दस्य प्रयोगसंदर्भः न केनापि कोषकारेण निर्दिष्टः नापि दृष्टचरः। तथापि शब्दो अयं प्राचीनः इति त्रिकाण्डशेष उल्लेखादवगण्यते। तस्यैव शिरःफल शब्दस्य संक्षेपः उच्चारणसुकरता अर्थप्रशस्तता चेत्यादिभिः भाषासु शब्दपरिवर्तनकारणे 'श्रीफल' इति परिवर्तनं प्राकृते, ततश्च मराठीगुर्जरीमुखासु प्रचलितासु भारतीयभाषासु संभवेत् इत्यपि केनचन मराठीकोषेकारेण उत्प्रेक्षितं वर्तते इति।

# पाणिनीये व्याकरणे दिक्तत्त्वम्

लेखक :

डा० श्री रामशरण शास्त्री

एम०ए०, व्याकरणाचार्यः सीनियर रिसर्चफेलो, दिल्ली विश्वविद्यालय, दिल्ली

●

अभ्यदिग् विचार्य्यते । अत्रादौ वैशेषिकमतमुपन्यस्यते । तथाहि :—भवति चाऽयं व्यवहारोऽस्मादिदं दूरम्, अस्मादिदं समीपमिति । स च व्यवहारः किमपि मूर्त्तद्रव्यमाश्रित्य कस्मिञ्चिन्मूर्त्तद्रव्य एव भवति । अत्र यमाश्रित्य सव्यवहारो प्रवर्त्तते, आश्रीयमाणः सोऽवधिरिति कथ्यते । अवधिमाश्रित्य यस्मिन् दूरत्वसमीपत्वे विज्ञायेते, तदवधिमद् द्रव्यंभवति । यतोहि यस्मिन्नवधिमति द्रव्ये दूरत्व-समीपत्वे प्रतीयेते, ते अवधिमन्तरा विज्ञातुं न शक्येते । तथा च यतः तयोर्विज्ञानमवधिमति द्रव्ये भवति, अवधिमद द्रव्यमवधिमपेक्षते । अवधिमन्तराऽवधिमति द्रव्ये दूरत्वे-समीपत्वयोर्विज्ञानाऽनुपपत्तेः ।

दूरत्वसमीपत्वयोर्विज्ञाने यदवधिद्रव्यम्, यच्चाऽवधिमद-द्रव्यंवर्त्तते, ते उभे द्रव्ये मूर्त्ते एव भवतः, न तु विभुनी द्रव्ये, विभुनि द्रव्येऽवधि, तदवतोश्चाऽसम्भवात् । नहि विभुनि द्रव्येऽवधि, तदवतोश्चाऽसम्भवात् । नहि विभुनि द्रव्ये दूरत्य-समीपत्वयोर्विज्ञानेऽवधि-अवधिमद्भावो भवति, सर्वमूर्त्तसंयोगित्वात् । अत एव विभुनो द्रव्यस्य दूरमिदमाकाशम्, समीपमिदमाकाशमित्यादि व्यवहारो न भवति । प्रत्युत भूर्त्तेष्वेव द्रव्येषु दूरत्व-समीपत्वयो सम्प्रत्ययं भवति । अत मूर्त्तान्येव द्रव्याण्यवधि-अवधिमद् भावं लभन्ते, न विभूनि (=आकाश-काल-दिगात्मा च) द्रव्याणि ।

दूरत्व-समीपत्वयोर्ज्ञानं नियतदिग्देशे समानकाले च यमवधिमपेक्ष्य यस्मिन्नवधिमति द्रव्ये (=पिण्डे) नैयत्येन भवति, तस्मिन्नेवाऽवधिमति पिण्डे नियतदिग्देशे समानकाले दूरत्व-समीपत्वयोर्नैयत्येन ज्ञानं न सम्भवति, चलद्रव्याणामनियतत्वात् अर्थाद्यस्मिन् पिण्डे दूरत्यस्यज्ञानं भवति, तस्मिन्नेव पिण्डे कदाचित्समीपत्वस्याऽपि ज्ञानं कर्त्तु शक्यते, एवं यस्मिन् पिण्डे समीपत्वस्य ज्ञानम्, तस्मिन्नेव पिण्डे कदाचिद् दूरत्वस्यापि । अत एव नैयत्येन प्रतीतये नियत-दिग्देशे समानकाले च पिण्डस्थितिरावश्यकी भवति । यथोक्तम् :—"इत इदमिति यतस्तद्दिश्यं लिङ्गम्" (वै० सू० २/२/१०) इति । अपि च शङ्कर मिश्र :—"इतोऽल्पतरसंयुक्तसंयोगाश्रयादिदं बहुतरसंयुक्तसंयोगाधिकरणं परम् । इतश्च संयुक्तसंयोगभूयस्त्वाऽधिकरणादिदं संयुक्त

संयोगाऽल्पीयस्त्वाधिकरणमपरमिति नियमदिग्देशयोः समानकालयोः पिण्डयोर्यतो द्रव्याद् भवति सा दिक्" (उप० २/२/१०) इति ।

अत्र परम्=दूरत्वम् अपरम्=समीपत्वम् ।

सा दिक् दूरत्व-समीपत्वे प्रत्यसाधारणंकारणं भवति । यतो हि नहि तां विना भूयसां संयोगानामधिकरणे दूरत्वम्, अल्पीयसां संयोगानामधिकरणे समीपत्वञ्च सम्प्रत्ययं कर्त्तु केनचिच्छक्यते । न च दिशमन्तरा परत्वाऽपरत्वयोरुत्पत्तिः, न च तयोरुत्पत्तिमन्तरा दूरत्वमिदमस्मात्, समीपत्वमिदमस्मादिति बुद्धिरुत्पत्तुं प्रभवति । अतः तासाम् (=बुद्धिनाम्) उपपत्तये दिशःकल्पना जायते । यथोक्तम्ः—"नहि तादृशं द्रव्यमन्तरेण भूयसां संयुक्तसंयोगानामल्पीयसां वा पिण्डयोरुपनायकमन्यदस्ति । न च तदुपनयनमन्तरेण तत्तद् विशिष्ट बुद्धिः । न च तामन्तरेण परत्वाऽपरत्वयोरुत्पत्तिः । न च तंदुत्पत्तिं विना तत्तद् प्रत्यय व्यवहारौ" (उप० २/२/१०) इति ।

न च कालिक परत्वाऽपरत्वयोर्बोधइव दैशिक परत्वाऽपरत्वयोरपि बोधं काल एव जनयतीति वाच्यम् ? कालस्य नियत क्रियोपनायकत्वेनैव सिद्धत्वात् । यदि कालो नियत दूरत्व-समीपत्वे अपि जनयितुं प्रभवेत्तर्हि-अन्यदेशस्थितं वस्तु; एतस्माद् भिन्नदेश स्थितमपिवस्तु प्रत्युपनायकं स्यात् । यथाह शङ्कर मिश्रः—"अनियत परधर्मोपनायकत्व कल्पनायां तु काश्मीरकुङ्कुमपरागं कार्णाटकामिनी कुचकलशंप्रत्युपनयेत्" (उप० २।२।१०) इति ।

परन्तु नैतत्सम्भवति, दैशिक परत्वाऽपरत्वे प्रति दिश एव कारणत्वम् एतस्या अनियतक्रितोपनायकत्वात् यथा—ज्येष्ठत्व-कानिष्ठत्वे प्रति कालःकारणं भवति, तथा दैशिक परत्वाऽपरत्वे अपि दिशः कारणत्वम् ।

एवञ्च नियतक्रियोपनायकः कालः, अनियत संयोगोपनायिका च दिक् । उभौ (=दिक्कालौ) परस्पर विरुद्ध स्वभाववन्तौ स्तः । अतः कथमन्यस्य कार्यमन्यः कर्त्तुमर्हति । यथा जलमेव निदाघे प्रचण्ड सूर्यरश्मिभिः सन्तप्तं जनं शैत्येन सन्तापं शमयति । अग्निरेव ज्वलयति । अत्राऽग्निजले परस्परं विरुद्ध स्वभाववती, नैतयोः स्वभावव्यत्यासो लक्ष्यते, तथा दिक्कालयोरपि । अत एव कालात् पृथग् दिग् द्रव्यमस्तीति गम्यते । यथोक्तम्ः—"नियतक्रियोपनायकात् कालादनियत संयोगोपनायिका दिक् पृथगेवे" (उप० २।२।१०) इति ।

किञ्चदपेक्षया यस्मिन् पिण्डे परत्वम्=ज्येष्ठत्वम्, एवं यदपेक्षया यस्मिन् पिण्डेऽपरत्वम्=कनिष्ठत्वम् । उभे ज्येष्ठत्व-कनिष्ठत्वे यदपेक्षया यस्मिन् पिण्डे भवतः । तस्मिन्नेव पिन्डे तदपेक्षया सदा नियमेनैव ज्येष्ठत्व-कनिष्ठत्वे भवतः । यस्मिन् पिण्डे ज्येष्ठत्व व्यवहारः, तस्मिन् पिण्डे कनिष्ठत्वव्यवहारो न भवति । न वा यस्मिन् पिण्डे कनिष्ठत्वव्यवहारः, तस्मिन् तस्मिन् पिण्डे ज्येष्ठत्वव्यवहारो भवति । परन्तु नैव दैशिकपरत्वाऽपरत्वे । यस्मिन् पिण्डे यदपेक्षया दूरत्वम्, तस्मिन्नेव पिण्डेतदपेक्षया समीपत्वमपि एवं यदपेक्षया यस्मिन् पिण्डे समीपत्वम्, तदपेक्षया तस्मिन्नेव पिण्डे दूरत्वमपि व्यवहारो भवति, पदार्थानामनियतदिग्देशत्वात्, असमानकालत्वाच्च । नियतदिग्देशेसमानकाले च स्थितानां पदार्थानां तु यदपेक्षया यस्मिन् दूरत्व-समीपत्वे तदपेक्षया तस्मिन् ते एव भवतः । एतेनाऽपि कालात् पृथग् दिग् द्रव्यमस्तीति गम्यते । यथोक्तम् :—"किञ्च नियतोपाध्युन्नायकः कालः, अनियतोपाध्युन्नायिका दिक् । भवति हि यदपेक्षया यो वर्त्तमानः, स तदपेक्षया वर्त्तमान एव । दिगुपाधौ तु नैवं नियमः, यं प्रति या प्राची तं प्रत्येव कदाचित्तस्याः प्रतीचीत्वात्" (उप० २।२।१०) इति ।

किञ्चाऽस्मात्पूर्वमिदम्, अस्माद् दक्षिणमिदमित्यादिदशदिग्व्यवहारो भवति । तां दिशां व्यवहारो नहि काल-

कृतोऽस्ति, अपितु दिक्कृत एव सः। यथोक्तम्:—"अस्मादिदं पूर्वम्, अस्मादिदं दक्षिणम्, अस्मादिदं पश्चिमम्, अस्मादिदमुत्तरम्, अस्मादिदं दक्षिणपूर्वम्, अस्मादिदं दक्षिणपश्चिमम् अस्मादिदं पश्चिमोत्तरम, अस्मादिदमुत्तरपूर्वम्, अस्मादधःतादिम्, अस्मादुपरिष्टादिदमित्यते प्रत्यया सौत्रेतिना संगृहीताः" (उप० २।२।१०) इति।

प्रच्यादिव्यवहारस्य कारणत्वसाधनम् :—

मेरोः प्रदक्षिणक्रमेण भ्रमतः-आदित्यस्य प्रथमः संयोगोऽभूत भविष्यति, भयन्नस्ति वा, स च संयोगो यस्यां दिशि भवति स एव प्राच्यादिदिशः कारणं भवति। यथोक्तम्:—"आदित्यसंयोगाद् भूतपूर्वाद् भविष्यतो भूताच्च प्राची" (वै० सू० २।२।१४) इति। इदमेवैतत्सूत्र व्याख्यातोऽपि स्पष्टीभवति—"प्राक् अस्यां सविता अञ्चतीति-प्राची। तथा च यस्यां दिशि मेरोः प्रदक्षिणक्रमेणभ्रमतः-आदित्यस्य प्रथमं संयोगो भूतपूर्वो भविष्यन् वा भवन् वा सा दिक् प्राची" (उप० २।२।१४) इति।

एवमेव दक्षिण-पश्चिमोत्तरा दिशो बोद्धव्याः। यथोक्तम्:—"तथा दक्षिणा प्रतीची उदीची" (वै० सू० २।२।१५) सूत्रेऽस्मिन् तथा—या च युक्तिः प्राचीदिग् व्यवहारे प्रदर्शिता, सैव युक्तिर्दक्षिणादिदिग् व्यवहारेऽपि मन्तव्या। यथोक्तम्:—"दक्षिणदिग् वर्तिनगादिना सहादित्यसंयोगाद् भूतपूर्वाद् भविष्यतो भूताद्वा दक्षिणा-व्यवहारः। एवं प्रतीच्युदीच्योरपि व्यवहारा उन्नेयाः" (उप० २।२।१५) इति।

प्राचीदक्षिणा दिशोर्मध्यवर्त्ति या दिक् सा दक्षिणा-पूर्वेति कथ्यतेः यथोक्तम्:—"यतेन दिगन्तरालानि व्याख्यातानि" (वै० सू० २।२।१६) इति। सूत्रेऽस्मिन् एतेन—प्राचीदक्षिणयोर्दिशोर्लक्षण साङ्कर्येण दक्षिणपूर्वादिगिति व्यवहारः। एवं दक्षिणपश्चिमा, पश्चिमोत्तरा, उत्तरपूर्वं त्यूह्यम्" (उप० २।२।१६) इति।

दिशोनित्यत्वसाधनम्:— समवायिकारणासमवायिकारणाऽन्यतरविनाशाद् द्रव्यं विनश्यति। यथा घटस्य समवायिकारणम्—कपालः, असमवायिकारणम्—कपालयो संयोगः। यथावा—पटस्य समवायिकारणम्—तन्तुः असमवायिकारणम्—तन्तूनां संयोगः। एतयोरन्यतररयोभयस्यवा विनाशाद् घटपटौ विनश्यतः। एतेनोभौ घटपटावनित्य द्रव्ये स्तः।

एवञ्च दिशः समवायिकारणम् समवायिकारणञ्चाऽन्यतरयोः किमपि भवेत चेत्तर्हि-एतयोरन्यतरस्योभयस्य वा विनाशाद् दिशोऽपिः विनाशस्यात्। यतोहि समवाटेयसमवामिकारणे मूर्त्तद्रव्ये एवं भवतः। तथा च यतो दिश-उक्तद्विविधकारणयोर्मध्ये किञ्चिदपिकारणं नाऽस्ति, अतो द्वयोः कारणयोरन्यतरस्योमयोर्वा विनाशाद् विनश्यतीति प्रश्न एवं नोदेति। एतेन दिशो नित्यत्वंगम्यते। यथोक्तं कणादेनः—"अद्रव्यत्वेन नित्यत्वमुक्तम्" (वै० सू० २।१।१३) इति। सूत्रेऽस्मिन्न-द्रव्यत्वेन—समवायिकारणाऽसमवायिकारणवद् भिन्नत्वेन दिशा नित्यत्व सिध्यति।

किञ्च यथा वायु परमाणोः समवायिकारणम् समवायिकारणञ्च किञ्चिन्नाऽस्ति। एतेन वायु परमाणोरनाश्रितत्वं सिध्यति। अनाश्रितत्वाद् वायु परमाणोर्नित्यत्वं सिद्धं भवति। अनेनैव हेतुना दिशोऽपि नित्यत्वम् विभ्व्या दिशोऽपि, अनाश्रितत्वात्। किञ्च गुणाश्रयत्वात् यथा वायु परमाणोर्द्रव्यत्वम्, तथा दिशोऽपि। यथोक्तं कणादेनः—"द्रव्यत्वनित्यत्वे वायुना व्याख्याते" (वै० सू० (२।२।२१) इति।

दिश एकत्वं नानात्वञ्च साधनम् :—येन कारणेनैकादिक् सिध्यति, तेनैव कारणेनाऽपराऽपि। अत्रैकस्या दिशो यत्कारणमस्ति, तदेवाऽपरस्या अपि दिशः। तथा च दिशो नानात्वसाधकप्रमाणस्याऽविशेषाद्दिश एकत्वं सिध्यति।

यथोक्तम् :—"तत्त्वंभावेन" (वै० सू० २।२।१२) इति। अस्मिन् सूत्रे-तत्त्वम्=एकत्वम्। भावेन=सत्तयेति व्याख्यातम्। यथा :—सत्तायोएकत्वम्, तथा दिशोऽपि। यथोक्तमुपस्कारकृताऽपि "दिग्लिङ्गाऽविशेषाद्विशेषलिङ्गाऽभावाच्च सत्तावदेकत्वंतदनुविधानादेकपृथक्त्वम्" (उप० २।२।१२) इति।

यद्यपि दिश एकत्वं वास्तवम्, तथापि प्राच्यादि व्यवहार बले न नानात्वमप्यौपाधिकमाश्रयणीयम्। यथोक्तम्:—"कार्यविशेषेण नानात्वम्" (वै० सू० २।२।१३) इति। सूत्रेऽस्मिन् कार्यविशेषः—प्राच्यादि व्यवहारविशेष इति। तेनैतस्या नानात्वमवकल्पनीयम्।

अथ व्याकरणदृशा दिग् विचार्यते। इमानि दिग्घटितानि सूत्राणि।

तथाहि :—१–[1]दिक्छब्देभ्यः सप्तमी पञ्चमी···पा० सू० ५।३।२७।

२–दिक्छब्दाग्राम जनपदाख्यान चानराटेषु पा० सू० ६।२।१०३।

३–दिङ्नामान्यन्तराले पा० सू० २।२।६।

शब्दथास्येऽपि दिशो लक्षणं तदेवाऽस्ति, यद्वैशेषिकैः स्वीक्रियते, न ततोऽपूर्वादिक्छाब्दिकैरङ्गीक्रियते। अत एव हेलाराजेन सिद्धान्ति तं यदिह शास्त्रे दिङ् न विभज्योच्यते, प्रत्युत वैशेषिक सम्मता एव दिगभ्युपगम्यते। तथाहि तस्य वचनम् "इहत्वनुद्यते, परं दिगिति न विभज्य कथ्यते" (हेला० ३।६।३) इति।

दिशः प्राच्यादिव्यवहारस्य विभाजिका या रवेः क्रिया, सैव रवेः क्रिया वैशेषिकैः, शाब्दिकैश्चाऽनुमन्यते। तथा चैतयोर्वाक्यं क्रमेणोद्ध्रियते। तथाहि:—मेरुं प्रदक्षिणमावर्त्तमानस्य भगवतः सवितुर्यं संयोगविशेषा लोकपालपरिग्रहीत दिक् प्रदेशानामन्वर्थाः प्राच्यादि भेदेन दशविधाः संज्ञाः कृताः, अतो भवत्या दशदिशः सिद्धाः" (प्र० पा० भा० पृ० १६६) इति।

अपि च "मेरुं प्रदक्षिणमावर्त्तमानस्य सवितुर्लोकपालपरिगृहीतैर्देशविशेषैर्ये संयोगाः, तदुपाधिना सूर्येण दिशः संयोगे सति भेदे भिन्नं दिक सामान्यं दिक् शब्दवाच्यं परिकल्पनीयम्" (हेला० ३/१/१५, ३/६/३) इति च।

दिशोभेदाः—अस्या दिश एकत्वं वास्तवं नानात्वन्त्वौपाधिकम्।

यथाह कैयटः—"एकाऽपि दिक् सूर्योदयास्तमयाद्युपाधिभेदादने का व्यपदिश्यन्ते। तथा दश दिश इति लोके व्यवहारः (प्र० ४/२/४६) इति।[1]

इदमेवमतं पतञ्जलिरपिस्पष्टी करोति—"वाता वान्तु दिशो दश" (म०भा० ४/२/४६) इति। अत्र वाताः-वायवः, वान्तु—चलन्तु, दिशोदश-दिगभेदस्य संख्यात्वं दश अस्ति। एतेन दिशो नानात्वं सिध्यति।

द्वयोर्दिशोर्मध्ये यादिगस्ति, सा अन्तरा दिगिति कथ्यते। यथाः—दक्षिणपूर्वयोर्मध्ये वर्त्तिनीयादिक, सा दक्षिणपूर्वेति। एवमेव दक्षिणपश्चिमा, पश्चिमोत्तरा, उत्तरपूर्वेति विज्ञेयम्। अत एवोक्तं कैयटेनाऽपि—"दक्षिणस्यांश्च पूर्वस्याश्च दिशो यदन्तरालं दिक्, सा दक्षिणपूर्वेत्युच्यते" (प्र० २/२/२६) इति।

एवञ्चैकस्या एव दिशः प्राची, प्रतीच्यादिविशेषाः। एतेषांप्राच्यादिशब्दानां पर्यायभूताः पूर्वादिशब्दा अष्टाध्यायाा बहुषु सूत्रेषु दृश्यन्ते।[2]

१—दिग्घटितानितत्सम्बन्धीनि च बहु सूत्राणि वर्त्तन्ते। द्र०—१।१।२८, २।३।२८, २।१।५०, ४।१।६०, ४।१।१०७ ४।३।६, ४।३।५४, ४।३।११२, ६।२।१६८, ७।३।१३;

१—द्र० हेला० वा० प० ३/६/३,

२—द्र० ५/३/३६, ५/३/२८, ५/४/१२६, ५/३/३४, ५/३/३८, ५/४/९८, ५/१/७७, ६/२/१०५, ६/२/१११, ७/३/१०

दिशः प्राच्यादिव्यवहारे वामहस्तादेः कारणत्वस्या खण्डनम् :—प्राच्यादिदिशो व्यवहारे उदयगिरिमभिमुखीभूयस्थितस्य पुरुषस्य यो हि वामहस्त प्रदेशः, साचोत्तरा दिक्, यश्च दक्षिण हस्त प्रदेशः, सा दक्षिणादिक्, यश्च-पृष्ठ प्रदेशः, साचि पश्चिमादिगिति केचिद् व्याचक्षते। तन्न युक्तं प्रतिभाति। यतो हि प्रतीच्यां स्थितमपि वस्तु प्राच्यां दिशि स्थितमपि भवति, स्थानपरिवर्त्तनेन। यथोक्तं हरिणा—

स्वाङ्गाद् व्यवस्था या लोके न तस्यां नियता दिशः।

प्रत्यङ्मुखस्य यत्पश्चात् तत्पुरस्ताद् विपर्यये॥

वा० प० ३/६/८

किञ्च दक्षिण भारताद् वङ्गदेशं गच्छन्, तं कुत्र गम्यते? इति पृष्टे सत्युत्तरदेशं गच्छामीति वक्तव्ये पूर्वदेशं (—प्राच्यांदिशि स्थितं वङ्गमुद्दिश्य) गच्छामीति सब्रूते। स्वाङ्गनिमित्तक।

दिग्व्यवस्थया तु स जन उत्तराभिमुखो भवति। तस्मात् स्वाङ्ग निमित्तकदिग् व्यवस्था न समीचीना, पूर्वोदाहृतेवाक्ये (—दक्षिण भारताद् पूर्वदेशं गच्छन्) स्वाङ्गनिमित्तक दिग् व्यवस्था न संघटते। किन्तु प्राच्यां दिशि स्थिततयैव सा लक्ष्यते। अतः स्वाङ्गनिमित्तक दिग्-व्यवस्था न मन्तव्या। परन्त्वनादिरूढ दिङ् निमित्तक-पूर्वापरादि दिग् व्यवस्थैवाऽङ्गीकार्या। यथोक्तम् :—

देशव्यवस्था नियमो दिक्षु न व्यवतिष्ठते।

रूढ़मप्यपरत्वेन पूर्वामित्यभिधीयते॥ वा० प० ३/६/६

दिशःकल्पनायां हेतुः—तत्र पूर्वत्वमपरत्वमिति व्यपदेशाऽऽधायकतया, एका दिक्काऽवयवप्रसारणरूपाया ऋजुताया अनेक दिक्काऽवयवप्रसारणरूपाया वक्रतायाश्-चोपपादकतया, लोष्टादेरूर्ध्वदेशाऽधोदेश संयोगोत्पादक क्रिययोत्क्षेपणत्वाऽपक्षेपणत्वजाति प्रयोजकतया च दिशः कल्पना जायते। यथाह भर्तृहरिः—

व्यतिरेकस्य भो हेतुरवधिप्रतिपाद्ययोः।

ऋज्वित्येव यतोऽन्येन विना बुद्धिः प्रवर्त्तते॥

कर्मणो जाति भेदानामभिव्यक्तिर्यदाश्रया।

सा स्वैरूपाधिभिर्भिन्ना शक्तिर्दिगिति कथ्यते॥

वा० प० ३/६/२,३

दिशः शक्तित्वम् :—शब्दशास्त्रे दिशो न वैशेषिकवदतिरिक्त द्रव्यत्वम्, प्रत्युत मूर्त्त द्रव्य परतन्त्रतयैवैतस्या द्रव्यत्वमवगम्यते। पृथिव्यादीनां मूर्त्तानामेव स्वातन्त्र्येण द्रव्यत्वम्। आकाशादीनां विभूनां पृथिव्यादिमूर्त्तद्रव्य परतन्त्रतया गृहगवाक्षाद्युपाधिरूपेण च प्रतीयन्ते।

एवञ्च दिक्छक्ति विशेष एव। शक्तिश्च शक्तिमद्द्रव्यमन्तरा न तिष्ठति। तथा च तासां शक्तीनां पृथिव्यादीनि द्रव्याण्येवाऽधिकरणत्वानि सन्ति। तेन शक्ति शक्तिमतार भेदोपचाराद् दिशोद्रव्यत्वं सिध्यति। यथाह भर्तृहरिः—

सा स्वैरुपाधिभिर्भिन्ना शक्तिर्दिगिति कथ्यते।

वा० प० ३/६/२

अपि च हेलाराज :—"कार्यकल्पयत्वे च सदैव पदार्थोपाधितया प्रतीतेः। स्वतन्त्रद्रव्यरूपतानाऽस्ति दिशः। नहि पृथिव्यादिवद् दिगुपलभ्यते। अत एव कालोऽपि शक्तिरिति वक्ष्यते।" (हेला० ३/६/२)

अत्र "अपि" पदेन आकाशाऽऽत्मनो ग्रहणं भवति। यतो हि आकाशाऽऽत्मनोरपि द्रव्यपरतन्त्रतयैव बोधो जायते। अत एव शरीराञ्छेदेनाऽऽत्मा, प्रतीयते, तदनवच्छेदे तु न, आत्मनो विभुत्वात्।

---

# विद्युद्ब्रह्मेत्याहुर्विदानाद्

## ELECTROLYSIS

### विद्युद्विद्यत्येनं पाप्मनो य एवं वेद विद्युद्ब्रह्मेतिविद्युदेवब्रह्म ॥

ले०— गोविन्द हरि मराठे, ग्वालियर

●

विद्युदब्रह्मेत्याहुः । विद्युतोब्रह्मणो निर्वचनमुच्यते– विदानादवखण्डनात् तमसो मेघान्धकारं विदार्य ह्यवभासतेऽतो विद्युत् । (दो अवखण्डने)

कुतोऽत्रागता इतिप्रश्नः ? तस्योत्तरमूसूर्ये समाहिता विद्युदहोरात्रे वर्षति–उक्तं च 'विद्युतो ज्योतिः परिसंजिहानं मित्रावरुणा' (ऋ० मं० ७-सू० ३३–१०) 'विद्युत्सूर्येसमाहिता' (वै० आ०) 'विद्युद्वृष्टि अहोरात्रं निमेषोन्मेषसंज्ञितम् इति श्रुतिः । मित्रावरुणाभ्यांनिर्मितं ज्योतिः अयं सूर्यो विद्युन्मयः अन्धकारोत्तरण हेतुर्भवति तस्मादुच्यते 'तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् ॥ (ऋ० मं० १-५०-४)

येयं विद्युन्मेघेषुदृश्यते येयं सूर्यसमाहिता सूर्यरश्मेरेव-विद्युदाकारेण परिणतत्वात् । "मरीचिर्मरुतामस्मि" (गी० अ० १०-२१)

'वाश्रेव विद्युन्मिमाति वत्सं न मातासिषक्ति । यदेषां वृष्टि रसर्जि ॥ (ऋ० मं० १-३८-८) वाश्रेव शब्दयुक्ता प्रस्नुतस्तनवती धेनुरिव विद्युत् मेघस्था दृश्यमानासती मिमातिशब्दं करोति । विद्युद्वेलायां हि मेघगर्जनं प्रसिद्धम् । माता धेनुः विद्युद्वत्सं न वत्समिव सिषक्ति । इयं विद्युद्-मरुतः सेवते । सिषक्ति सेवनार्थः । 'सिषक्तुसचत इति सेवमानस्य' (निरु० ३-२१) इति यास्केनोक्तत्वात् । यत् यस्मात् कारणात् एषां मरुतां संबन्धिनी वृष्टि रसर्जि, गर्जन सहिते विद्युत्कालेवृष्टा भवति तस्मात् विद्युतो मरुत्सेवनमुपपन्नम् । 'आ विद्युन्मद्भिर्मरुतः' तस्मात् मरुतो विश्वभानवः सर्वतो व्याप्त तेजः, व्याप्तघनावा, आङ्गल भाषायां इलेक्ट्रान (Electron) इत्याख्याता विद्युन्मयो वामवर्तिनः (Electro Negative) भवन्ति । The mass of an Electron is purely electrical. J. J. Thomson.

An electron possesses mass solubly by virtue of its electrical Charge.

(Atomic Physics J. B. Rajam)

मरुताम् विभुत्वंख्यापयति श्रुतिः—'आ ये विश्वा पार्थिवानि पप्रथन्रोचनादिवः । मरुतः सोमपीतये' ये मरुतः विश्वाविश्वानि पार्थिवानि पृथिव्यां भवानि भूतजातानि दिवः द्युलोकस्य रोचना रोचमानानि ज्योतींषि च आपद्ययन् सर्वत्र विस्तारितान्कार्षुः । सादृशान् देवान् सोमपीतये सोमपानाय आह्वयामि (ऋ० मं० ८-५४-५) Marut i. c. Electrons are Omni present, They are the Common Constituents of all matter

in existence, where ever, on the earth or Solar atmosphere, (Physics—Rajam) 'रोदसी हि मरुतश्चक्रिरे' (ऋ० मं० १-८५-१) ते मरुतः सुदंससा शोभन कर्माणः रोदंसीद्यावा पृथिव्यौ वृधे वृष्टि प्रदानादिना-वर्धनाय चक्रिरे कृतवन्तः ॥ इति । 'मरुतोरंहयंतः' (ऋ० मं० १-८५-५) 'रहिगसौ' (They travel with in credible speed.) अरुषस्य आरोचमानस्य सूर्यस्य वैद्युताग्नेः सकाशात् वृष्ट्युदकधारा भवन्तः विष्यन्ति विमुचन्ति-इत्यर्थः । एवंमरुताम् विद्युन्मयत्वं विभुत्वं च विज्ञानतया-प्रत्यक्षतः सिद्धम् भवति । एवं सर्वगताशक्तिः विद्युद् ब्रह्मेति इति यो वेदासौ–वियत्यवखण्डयति विनाशयति पाप्मन एनमात्मनं प्रति प्रतिकूल भूताः पाप्मानो ये तान् सर्वान् .पाप्मनोऽवखण्ड यतीत्यर्थः । सैवविद्युत् अन्तिवामा अस्मद्न्तिकेशरीरे वामंवननीयं प्राणाख्यंघनंरक्षति । अस्मच्छत्रुं दूरे अस्मत्तोविप्रकृष्टदेशे-वर्तमानं करोति–व्युच्छति विभाति इत्यर्थः । अत्र अन्ति वामा संज्ञया नाडी विशेषो लक्ष्यते-आङ्गल (ऋ० मं० ७-७७-४) शारीर विज्ञान तयापि 'A nerve is iso-Electric (Hali Burton) यथाऽमित्रो दूरेभवति तथा उर्वी गव्यूतिं भूमिं अभयं नः अस्माकं कुरुते । किं च द्वेष्ट्न् यावय अस्मत्तः पृथक् कुरुते (by electrolysis) एतद्विद्युद्विश्लेषणानाम् । तथा सा विद्युद् शत्रुणां धनानि आभरति आ हरति । राधः घनं प्रेरयति इत्यर्थः । ईदृशी-विद्युद् 'इयं कल्याण्य १ जरामर्त्यस्या मृतागृहे यस्मै कृता-शये सयश्चकार जजार सः ॥ (अथर्व० कां० १०-८-२६)

एवं इयं कल्याणी सुषुम्ना नाडी (Spind Cord Along with the Central Nervous system i. c. Brain) 'विद्युद्विलासवपुपाश्रियमावहन्तीं' देवीं सर्वे योगिनः परमादरेण भजन्ति–इत्यर्थः । तस्मात् इयं अमृत-स्राविणीं दैवीं 'विद्युद्ब्रह्म' इत्याचक्षते ब्रह्मवादिनः ।

'अथ दैवीः । तृप्तिरिति वृष्टौ । बलमितिविद्युति ।
(कृ० य० तै० आ०)

अथ दैवीः द्युलोकात्प्राप्ता इत्यादिना अथमनुष्या-वयवगत पञ्चोपास्तिकथनानन्तरं दैवीर्देव शरीरगता उपासनाकथ्यन्ते । वृष्ट्याभिमानि देवतायां तृप्तिरूपेणा-वस्थितंब्रह्म । तथैवविद्युदभिमानि देवतायां बल-ऊर्जा-रूपेणावस्थितम् तत् बलं विद्युति वर्तते–सैवादितिः ॥ अत्र सकल जगदात्मनादितिःस्तूयते—

अदिति द्यौं रदितिरन्तरिक्षमदितिर्मातास पिता स पुत्रः।
विश्वेदेवा अदितिः पञ्चजना अदितिर्जातम–
(ऋ० मं० २-सू० ८१-२०) दितिर्जनित्वम् ॥१०॥

या सर्व देवतामयीप्राणेन संभवतिताम् आह श्रुतिः—या प्राणेनसंभवत्यदितिर्देवतामयी ।

गुहां प्रविश्यतिष्ठन्तींया भूतेभिर्व्यजायत ।
एतद्वै तत् ॥७॥

या सर्वदेवतामयी सर्वदेवतात्मिका प्राणेन हिरण्यगर्भ-रूपेण परस्माद्ब्रह्मणः संभवति शब्दादीनामदनाददितिस्तां पूर्ववद्गुहां प्रविश्य तिष्ठन्तीमदितिं । तामेवविशिनष्टि-याभूतेभिर्भूतैः समन्विताव्यजायत, उत्पन्नेत्येतत् सैवादिति-र्विद्युत् वामाशक्तिरूपेणावस्थिता भूतजातस्य प्रेरयित्री सूर्या इत्युच्यते—उक्तं च—

सूर्यायै देवेभ्योमित्राय वरुणाय च ।
ये भूतस्य प्रचेतस इदं तेभ्योऽकरं नमः ॥
(ऋ० मं० १०-८५-१७)

ये देवाः भूतस्य भूतजातस्य प्रचेतसः—सुमतयोऽभि-मतप्रदा भवन्ति तेषां मध्ये सूर्या सूर्यस्यदुहिता वा पत्नी विद्युच्छक्ति स्तया द्वौ मित्रावरुणौ अहं नौमि इत्यर्थः । यच्चब्रह्म--ज्ञानक्रियाशक्तयुपेतं तदेतत् सर्वेषां प्राणिनां विधारकं भवति । विज्ञानतया विद्युच्छक्तेः रूपं महत्त्वं च आम्नायते— य एवासौविद्युति एतमेवाहं ब्रह्मोपासइति ॥ विद्युदेवब्रह्म—

"द्वेवाव ब्रह्मणोरूपेमूर्तं चामूर्तं च, मर्त्यंचामृतं च, स्थित च यच्च सच्च त्यच्च ।"

यद्द्वयवहार्यं ब्रह्मणोरूपं तन्निरूप्यते--द्वे वैमिथुनं—मिथुनमेवैतत् प्रजननंक्रियते—'यावत्संजायते किंचिद् सत्त्वं-स्थावर जङ्गमं क्षेत्र क्षेत्रज्ञ संयोगात् तद्विद्धि भरतर्षभ' 'संसृष्टं घनमुभयं सममाकृतभस्मभ्यं दत्तां—(भ० गी० अ० १३-२६) वरुणश्च मन्युः···।। (ऋ० मं० १०-८४-७)

'इयं' संसृष्ट—अविभागमापन्ना विद्युत् सर्वेषां भूतानामध्यस्यै विद्युतः सर्वाणि भूतानि मधुयश्चायमस्यां विद्युति तेजोमयोऽमृत मयः पुरुषोयश्चाय मध्यात्मं तैजसस्तेजो मयोऽमृत मयः पुरुषोऽयमेव स योऽयमात्मेद ममृतमिदं ब्रह्मेदं सर्वम् ।। (बृ० आ०)

This Electric-Vidyuta. i. e. Energy is the essence of all created things, and all things are created from energy. i. e. Electric and are the Condensed forces of energy, and this 'Purush' i. e. positive potential-proton प्रतन= विष्णु which lies in the current of electricity is illumiuating and imperishable, with a positive+charge.

This 'Purush' is spiritual—brilliant-illuminating and imperishable, it is the Atman-Soul which is immortal, all and all.

अन्यच्च श्रुतिः—

'विद्युदसीति मन्त्रस्य अग्निर्ऋषि वरुणोदेवता ।'

"विद्युदसिविद्यमे पाप्मानमृतात्सत्यमुपैमि ।।"

'ऋचो अक्षरे परमेव्योमन् यस्मिन्देवा अधि विश्वे निषेदुः ।' यस्तन्नवेद किमृचा करिष्यति—य इत्तद्विदुस्ते इमे समासते ।। (ऋ० मं० १-१६४-३५) एवं सर्वगता-शक्तिर्विद्युत्सा ब्रह्मेतिविविच्यते । इति शम् ।।

गोविंद हरि मराठे
आयुर्वेदतीर्थ



# संस्कृतभाषायाः संस्कृतेश्च परिरक्षणं कर्तव्यम्

—रमेशचन्द्र गोविन्दलाल शाह, डभोई (बड़ौदा)

सकलविश्वान्तर्गतभाषासु आङ्ग्लग्रीकलेटिनेत्यादिसु हिन्दी-तामिल-तेलगू-महाराष्ट्री-गौर्जरीत्यादिसु च मूर्धन्यस्थानं वहन्ती भारतीयसंस्कृतेश्च परिनिर्वाहं कुर्वन्ती संस्कृतभाषा वर्तते । सा च अनादिभाषा यामुपजीव्य अन्याः भाषाः पुष्टिं लभन्ते, यस्यां वा भाषायां वेदसमयात् अद्यपर्यन्तम् महर्षिभिः कविभिश्च सकलानि शास्त्राणि विरचितानि वर्तन्ते । तानि शास्त्राणि धार्मिकाणि श्रुतिस्मृतिपुराणेतिहासाख्यानि तत्त्वचिन्तनाचारयुतानि, नीतिशास्त्राणि राजनीतिव्यवहार-निरूपकाणि, संगीतशास्त्राणि, गाननृत्यकलाकमनीयानि, काव्यशास्त्राणि नाट्यालंकाररसोत्पादकानि, अर्थशास्त्राणि व्यष्टिसमष्टिहितार्थवाणिज्यकुशलानि, कामशास्त्राणि धर्ममोक्षसाधकानि, भैषज्यशास्त्राणि सकलरोगनाशकानि, शिल्पशास्त्राणि यन्त्रगृहदुर्गराजपथादिनिर्माणविषयकानि, युद्धशास्त्राणि भूमिनौकादियुद्धप्रकारनिरूपकाणि स्थलानुरूपनियोजित प्रकाशकूटाख्ययुद्धव्यूहरचनापूर्वकाणि च विरचितानि । सा च अमृतभाषा सरसभाषायामन्तरेण सर्वाः भाषाः निश्चेतनाः निरसाः संपत्स्यन्ते । यथा लवणमन्तरेण हरिद्रामरीचिकादिनिर्मितं भोजनं निरसं रुचिं नोत्पादयति । सा च संस्कारभाषा धर्मभाषायां विना अस्माकम् प्राणभूतायाः शाश्वतसुखशान्तिप्रदायिकायाः संस्कृतेः परिरक्षणमशक्यमेव । तस्मात् संस्कृतभाषा अधीतिबोधाचरणप्रसारणैः सर्वथैव परिरक्षणीया ।

ये तु संस्कृतिं विरुन्धन्ति संस्कृतभाषायाः बहिष्कारं च कुर्वन्ति यत्—"अस्माकम् संस्कृतिः न विकासशीला अपूर्णा च तथा संस्कृतभाषा मृता कठिनतमा च", ते सर्वेऽपि असत्यं ब्रुवाणाः भ्रान्ताः इति मत्वा समुपेक्षणीयाः सर्वथैव तिरस्करणीयाः । अस्माकं संस्कृतिः सर्वभूतहितार्थमेव प्रवर्तमाना, गुणकर्मविभागशः वर्णाश्रमपद्धत्या व्यष्टिसमष्ट्योः प्रेमत्यागात्मकधर्मान् निरूपयन्ती, ज्ञानकर्मध्यानभक्तियोगानां वर्णनेन सकलन्तरङ्गबहिरङ्गादोषान् निरस्यन्ती, लौकिकपारलौकिकसाधनानि वर्णयित्वा लौकिकालौकिकां सर्वाभाषां प्रकुर्वाणा नित्यविकासशीला सर्वाङ्गसम्पूर्णा च विराजते । सकलसंस्कृतवाङ्मयेषु च इमां संस्कृतिं वितन्वती संस्कृतभाषा न लेशतोऽपि कठिना किन्तु सरला एव । सा न मृता अमृतस्वरूपा एव । तां ये कठिनां वदन्ति तेषाँ हृदयानामेव काठिन्यम् । तां ये मृतां मन्यन्ते ते एव जीवन्तोऽपि संस्कृतभाषानभिज्ञत्वेन मृतसदृशाः ।

प्राचीनसमये संस्कृतभाषा भारतीयानाम् राष्ट्र-भाषा आसीत् । पश्चात् अन्यप्राकृतभाषाप्रचार-बाहुल्येन समयपरिवर्तनेन सह संस्कृतभाषाऽपि साधारणजनसंपर्कमनपलभ्य केवलपण्डितजनवाणी मलंकुर्वतां पण्डितभाषा बभूव । किन्तु सा राज्याश्रयं प्राप्य सर्वासु भाषासु विशिष्टस्थानं तु प्राप्तवत्येव । अन्यासु भाषासु बह्वः तत्समाख्याः शब्दाः संस्कृतभाषायाः एव समागताः । सांप्रतिकयुगे जनाः मन्यन्ते यत् संस्कृतभाषा कठिनतरा इति । किन्तु सरलव्याकरणपद्धत्या तत्समशब्दप्रयोगैश्च यदि संस्कृतभाषायाः शिक्षणं प्रचलितं भवेत् । तर्हि संस्कृतभाषा बहुजनप्रिया सरलतमा च सञ्जायेतै इति निर्विवादं वक्तु शक्यम् सांप्रतिक युगे संस्कृत भाषायाः प्रचारः न केवलम् आध्यात्मिक विज्ञान क्षेत्रे भवितव्यः किन्तु भौतिक विज्ञानक्षेत्रेऽपि कर्तव्यः संस्कृतवाङ्मय आधुनिकाः विषयाऽपि वर्णयितव्या लोकप्रीति संपादनाय संस्कृत भाषायाम् संस्कृत साहित्ये ईदृशः प्रयासः कृतः श्रीमत्या पण्डितया 'क्षमाराव' महोदयया 'सत्याग्रहगीता' इत्यारव् रचनां निर्माय । अन्ततो गत्वा संस्कृतभाषायाः सरलरीत्या यदि प्रसारः भवेत्, तर्हि सा बहुजनोपयोतिनाम् विषयानाम् प्रचारिका परमानन्ददायिनी राष्ट्रभाषा भवितुमर्हति । विश्वस्य बह्वीनां भाषाणां मूलं तु संस्कृत भाषा एव । सर्वसंस्कृतीनाम् प्रथमस्थानमपि भारतीय संस्कृतेरेव । भारतीय संस्कृतेः निरूपणां तु संस्कृतभाषायामेव कृतम् इति प्रसिद्धमेव । तस्मात् संस्कृतभाषा न केवलम् राष्ट्र-भाषा भवितुमर्हति किन्तु विश्वभाषाऽपि भवितुमर्हति इति न लेशतोऽपि शङ्काकर्तव्या ।

इति शम्



अखिल भारतीय संस्कृतसाहित्यसंमेलनोपस्थितेषु

# सुर सरस्वती सेवा रसिकेषु

विनायकशास्त्री टिल्लुः

भू० पू० इन्दौरस्य राजकीयसंस्कृतमहाविद्यालयाध्यक्षः
भू० पू० सिन्धियाप्राच्य 'ग्रन्थालयाध्यक्षश्च (विक्रम वि० वि० उज्जयिनी)

प्राचीनैः कठिनीकृता
[नवजनैर्नीता परां स्वैरिताम् - दैवीवागियम्
'गाम्भीर्यतो भ्रंशिता'
इति वा पठेत्
अद्य यात्युभयतोभ्रंशानुगां दुर्गतिम्
सैषा संप्रति
संस्कृति - प्रणयिभि- प्रत्नैस्तथा सेव्या,
येन विहाय दोष - युगलं, स्याद् राष्ट्र - भूषाऽऽवहा ॥१॥
नेया नेयमये ! निगूढरचनाक्लेशोत्कटत्वं, नवा—
आसाद्या सरलत्वमप्यतितरां येनाऽऽदरो नङ्क्ष्यति ।
रक्ष्या प्राक्तन - संस्कृतिः,
प्रणयतो ग्राह्यं नवं चारु यत्
नीर - क्षीर - विवेक - पूर्ण - धिषणैः प्राज्ञैः, मरालैरिव ॥२॥
त्यक्त्वा दूरमिहाऽऽग्रह-ग्रहिलताम्
अन्धानुयानं तथा
ज्ञात्वा गौरवमेतदीयम्
उपयुक्तांशाँश्च राष्ट्रोदये ।
साध्यः सन्मणि-हेमवत् तदुभयोर्
योगोऽत्र सम्मेलने
येन स्यात् सुफलत्वमस्य
सुर-वाक्-सेवा-व्रतं चातुलम् ॥३॥
इत्थं विशेष-विदुषां पुरतः संकुचद्वचः
कथञ्चिदिह विन्यस्य साहसाद् विरमत्ययम् ॥

# भाषा विभाग, हरियाणा

## संस्कृत पुस्तक तथा निबन्ध प्रतियोगिता, वर्ष १९७३-७४

| प्रतियोगिता वर्ग | | पुरस्कार—राशि |
|---|---|---|
| क. पद्य-कृति (पुस्तकाकार) | | ५०० रुपए |
| ख. गद्य-कृति (पुस्तकाकार) | | ५०० रुपए |
| ग. निबन्ध | प्रथम पुरस्कार | १५० रुपए |
| | द्वितीय पुस्कार | १०० रुपए |

इन तीन वर्गों में केवल हरियाणा के लेखक ही भाग ले सकते हैं। हरियाणवी होने का प्रमाण-पत्र विधायक संसद-सदस्य-राजपत्रित अधिकारी द्वारा सत्यापित होना चाहिए। ग' वर्ग का सत्यापन प्रधानाध्यापक भी कर सकते हैं।

घ. गीता पुरस्कार विषय—काव्य कृति/शोध/दार्शनिक या साहित्यिक विवेचन—

पुरस्कार राशि १००० रु०

'घ' वर्ग में हरियाणा राज्य से बाहर के लेखक भी भाग ले सकते हैं।

— रचनाएं मौलिक तथा एक अप्रैल, १९७२ से ३१ मार्च १९७३ के बीच लिखित या प्रकाशित होनी चाहिएं। किसी परीक्षा-डिग्री के लिए प्रस्तुत-स्वीकृत शोध रचना या टैक्सट बुक स्वीकार्य नहीं होगी। एतदर्थ प्रतियोगी द्वारा प्रमाणपत्र संलग्न किया जाएगा।

— भाषा विभाग हरियाणा के कर्मचारी प्रतियोगिता में भाग नहीं ले सकेंगे।

— गत दो वर्षों से किसी वर्ग में निरन्तर विजेता प्रतियोगी के पुनः उस वर्ग विजेता घोषित होने पर केवल प्रशंसा-पत्र ही दिया जाएगा। पुरस्कार द्वितीय सर्वोत्तम रचना पर दिया जाएगा।

— निर्णयानुसार पुरस्कार-राशि को विभाजित या कम किया जा सकता है।

— प्रत्येक वर्ग के लिए पुस्तक-पाण्डुलिपि की तीन-मुद्रित-टाईप की हुई सुवाच्च रूप में लिखित प्रतियां (जो लौटाई नहीं जायेंगी) ३१ अगस्त, १९७३ तक निम्न पते पर प्राप्त हो जानी चाहिएं। बाद में प्राप्त रचनाएं स्वीकार्य नहीं होगीं।

निदेशक :

**भाषा विभाग, हरियाणा**

कोठी नं० १५८०, सैक्टर १८-डी

चण्डीगढ़।





## संस्कृत रत्नाकर के स्वामित्व का विवरण
## संस्कृतरत्नाकरस्य स्वामित्वादिकं विवरणम्

१. प्रकाशनस्थानम् (१८, थियेटर कम्यूनिकेशन बिल्डिंग कनाट प्लेस, नई दिल्ली-१)

२. प्रकाशनावधिः (मासिकम्)

३. मुद्रकः (डा० गोस्वामी गिरिधारीलालः)
नागरिकता (भारतीया)

४. प्रकाशकः (डा० गोस्वामी गिरिधारीलालः)
नागरिकता (भारतीया)

५. सम्पादकः (डा० गोस्वामी गिरिधारीलालः)
नागरिकता (भारतीया)
प्राप्तिस्थानम् (१८, थियेटर कम्यूनिकेशन बिल्डिंग कनाट प्लेस, नई दिल्ली)

६. स्वामित्वम् (अखिलभारतीय संस्कृत-साहित्य-सम्मेलनस्य)
मया डा० गोस्वामिगिरिधारिलालेनोद्घोष्यते समाधिकतमज्ञानस्य तथा विश्वासस्यानुसारं पूर्वोक्तविवरणंसत्यमस्ति ।

**डा० गोस्वामी गिरिधारीलालः**

